कृष्णदास संस्कृत सीरीज २१६

आचार्यमुकुलभट्टकृता

# अभिधावृत्तिमातृका

सुबोधिनीसंस्कृतवृत्त्या सङ्गमनीहिन्दीवृत्त्या च विभूषिता

वृत्तिकारः संपादकश्च

डॉ. सुज्ञानकुमारमाहान्तिः

चौखम्बा कृष्णदास अकादमी, वाराणसी

कृष्णदास संस्कृत सीरीज

२१६

***

आचार्यमुकुलभट्टकृता

# अभिधावृत्तिमातृका

सुबोधिनीसंस्कृतवृत्त्या सङ्गमनीहिन्दीवृत्त्या च विभूषिता

वृत्तिकारः संपादकश्च

**डॉ० सुज्ञानकुमारमाहान्तिः**

# ABHIDHĀVṚTTIMĀTṚKĀ

OF

MUKULBHAṬṬA

With **Subodhinī** First Sanskrit Commentary and Saṅgamanī Hindi Commentary

By

**Dr. Sugyan Kumar Mahanty**



**चौखम्बा कृष्णदास अकादमी, वाराणसी**

प्रकाशक : चौखम्बा कृष्णदास अकादमी, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : प्रथम, वि०सं० २०६५, सन् २००८

ISBN : 978-81-218-0251-2

31.12.10


के० ३७/११८, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास
पो० बा० नं० १११८, वाराणसी-२२१००१ (भारत)
फोन : (०५४२) २३३५०२०

*अपरं च प्राप्तिस्थानम्*

**चौखम्बा संस्कृत सीरीज आफिस**
के० ३७/९९, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास
पो० बा० नं० १००८, वाराणसी—२२१००१ (भारत)
फोन : (आफिस) (०५४२) २३३३४५८
(आवास) (०५४२) २३३५०२०, २३३४०३२
Fax : 0542 - 2333458
e-mail : cssoffice@satyam.net.in

राष्ट्रपतिसम्मानप्राप्तः

**महामहोपाध्यायः डॉ. भास्कराचार्यः त्रिपाठी**

सम्पादकः, संस्कृतप्रतिभा, साहित्य अकादमी, नई दिल्ली,विजिटर्स नोमिनी, पॉण्डिचेरी-केन्द्रीय-विश्वविद्यालयः,अध्यक्षः, आदर्श-संस्कृत-महाविद्यालयः, मैनपुरी,सदस्यः, संस्कृत-डिक्सनरी-प्रोजेक्ट, डेकन् रिसर्च इन्स्टीट्यूट, पूना

निवासः - ४२, गोमती-कॉलोनी, नेहरू-नगरम्, भोपालम्, ४६२००३ दूरभासः ०७५५-२७७६१५६

# प्ररोचना

सुज्ञानप्रवणः कलासु निपुणः शास्त्रेषु दक्षः शुचिः
साहित्ये सुकुमारवस्तुनि सदा दिव्यां गिरं संश्रयन्।
सङ्गीते श्रुतिमाधुरीसुललिते वीणाक्वणौ रञ्जिते
धन्योऽयं मुरलीधरस्य तनुजः सूरिप्रियो राजते।।१।।

शब्दाभिधाबोधपटीयसीयं
**सुबोधिनी** काचन नव्यरीतिः।
प्रस्तूयते **सङ्गमनी** वदान्या
माहान्ति-सुज्ञान-कुमारकीर्तिः।।२।।

मरन्दो मौकुलैर्लभ्यः काव्यामृतपिपासुभिः।
गुणेषु दोषसाकांक्षैर्नवा मौकुलिभिर्मलम्।।३।।

**डॉ. भास्कराचार्यः त्रिपाठी**
भोपालम्, दिनांकः ८/४/२००८

**डॉ.सूर्यमणिरथः**
प्रवाचकः, साहित्यविभागाध्यक्षश्च
राष्ट्रियसंस्कृतसंस्थानम्, श्रीसदाशिवपरिसरः, पुरी
निवासः- मातामठलेन, चुडङ्गसाही, पुरी-७५२००१, ओडिशा,

# अभिमतम्

ध्वनिविरोध्यालङ्कारिकेषु नवममशतकस्यान्तिमे भागे सम्भूतः (खी. ८८३-९२५) मुकुलभट्टः अन्यतमः भवति। तेन रचिते 'अभिधावृत्तिमातृका' इति ग्रन्थे शब्दादर्थप्रकाशने केवलमभिधैवैकमात्रं वृत्तिरिति विषय आलोचितोऽस्ति। तन्मतेनाभिधाशक्तेर्नामान्तरमपि लक्षणा भवति। लाक्षणिकार्थस्य बोधने इयमभिधापि लक्षणोच्यते। प्रथमकारिकायां स लिखति-

शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते।। (अ.वृ.मा./का.१)

अधुना भारतस्य विभिन्नसंस्कृतानुष्ठानेषु पाठ्यक्रमरूपेण 'अभिधावृत्तिमातृका' स्थिरीकृतास्ति। अस्य ग्रन्थस्य हिन्दीभाषया कृतं व्याख्याद्वयं पूर्वमासीत्। अस्यां परिस्थितौ साहित्यिकेन युवाध्यापाकेन डॉ.सुज्ञानकुमारमाहान्तिमहोदयेनास्य ग्रन्थस्य संस्कृतव्याख्या **'सुबोधिनी'** अपि प्रतिपादिता। संस्कृतव्याख्यया सह हिन्दीभाषया कृता **'सङ्गमनी'** व्याख्याऽप्यस्मिन् ग्रन्थे विलसन्ती वर्तते। संस्कृतभाषया कृता टीकाऽत्र प्रथमा इति मन्ये।

साधारणपाठकानां छात्राणां च कृतेऽस्मिन् ग्रन्थे यत्र यत्र किञ्चित्काठिन्यमनुभूतमासीत्तत्तत्स्थलमधिकतरसरलसुबोधमार्गेण व्याख्यायासौ साहित्यिको युवाध्यापकोऽस्मिन् नवीने ग्रन्थे तत्तत्परिस्करोति। ग्रन्थोऽयं सर्वादृतो भवतु, मूर्धन्यविद्वत्सु युवाध्यापकस्यायुष्मतः सुज्ञानस्य प्रतिभा विच्छुरिता च भवतु इति जगन्नाथदेवस्य चरणकमले मे प्रार्थना। इति।

ता. १.०३.२००८ **डॉ.सूर्यमणिरथः**

# शिवसंकल्पमस्तु

शाब्दबोधे पदज्ञानजन्या पदार्थोपस्थितिः कारणम्। आकाङ्क्षादिज्ञाने सत्यपि पदार्थोपस्थितेरसत्त्वे शाब्दबोधानुदयात्। शब्दो ह्याकाशस्य गुणोऽतः समवायेनाकाशे वर्तते। किन्तु घटपदसम्बन्धितयाऽऽकाशस्योपस्थितावपि घटपदादाकाशशाब्दबोधो न सञ्जायते। अतो वृत्तिरूपसंबन्धेन पदसम्बन्धिनामर्थानामेव पदाधीनोपस्थितिः शाब्दबोधे कारणमङ्गीकरणीयम्। न चैवमावश्यकस्य वृत्तिज्ञानस्य घटपदं घटे शक्तमित्यादिरूपतया घटविषयकत्वे सिद्धे तत एव घटाद्यर्थशाब्दबोधसम्भवात् तदुत्तरं शाब्दहेतुतया घटाद्यर्थोपस्थितिकल्पनं किमर्थमिति वाच्यम्, पदप्रयोज्यविषयताया एव शाब्दप्रयोजकत्वानुभवात्। शाब्दस्थले हि पदार्थज्ञानं न विशेषणज्ञानात्मकतामात्रेणोपयुज्यते, तथा सति प्रत्यक्षादिजन्ये घटादिज्ञाने सत्यपि घटादिशाब्दबोधापत्तेः। पदप्रयोज्यतदर्थविषयतायास्तदर्थशाब्दबोधप्रयोजकत्वाङ्गीकारे तु घटादिगता प्रत्यक्षादिविषयता न घटपदप्रयोज्येति न घटशाब्दबोधापत्तिः। एवञ्च शक्त्यादिज्ञानीया तदर्थविषयता न पदप्रयोज्येति सा न शाब्दबोधोपयोगिनीत्यतः शक्तिज्ञानानन्तरं पदार्थोपस्थितिः स्वीकरणीया। तदीयविषयतायाः पदप्रयोज्यतया भवति सा शाब्दबोधे कारणम्। एवञ्च वृत्तिज्ञानाधीनपदजन्यपदार्थोपस्थितिः एव शाब्दबोधे कारणत्वेनाङ्गीकर्तव्या भवति।

सेयं वृत्तिस्त्रिधा, अभिधालक्षनाव्यञ्जनाभेदात्। तत्राभिधावृत्तिमभिव्याप्य यद्यपि नानानामग्रन्थप्रबन्धेषु बृहन्निरूपणमक्षिविषयीभवति, तथापि श्रीमताऽऽलङ्कारिकभट्टेन मुकुलभट्टेन यथा 'अभिधावृत्तिमातृके'ति ग्रन्थेऽभिधा न्यरूपि, तन्नूनं स्वानितरसाधारण्येनास्माकं चेतश्चमत्कुरुते। अभिधां केन्द्रीकृत्य वृत्तिनिहितसमस्ततत्त्वस्फोरणे लघुकलेवरोऽपि ग्रन्थोऽयं सर्वत्राध्येयाऽध्याप्यत्वेन चकास्ति। ग्रन्थस्यास्य दुरुहत्वादपेक्षते काचित्

संस्कृताहिन्दीटीकेति चिराच्चिन्तातुरेण ज्ञानधनेन डॉ.सुज्ञानकुमारमाहान्तिमहोदयेन श्रमेण क्रमेण स्वीयशेमुषीसम्पत्त्या च वृत्तिद्वयी विरचय्योक्ताऽपेक्षा प्रापारि।

ग्रन्थस्यास्य वृत्तिकारो डॉ.सुज्ञानकुमारमाहान्तिमहाशयो हि सरस्वतीकलाकुलोत्कलितस्योत्कलप्रदेशस्य ख्यातनामभिः गुरुभिः साकमलङ्कारशास्त्रं पारम्परिक्या रीत्याऽधीत्यावगत्य च सन्ततं मौलिकचिन्तनानुशीलनपरो नवनवोन्मेषशालिन्या दृष्ट्या किमप्याविचिकीर्षू राष्ट्रियसंस्कृतसंस्थानस्य भोपालपरिसरस्य साहित्यच्छात्रेभ्यः साक्षादध्यापनेन, एतदितरच्छात्रेभ्यश्च स्वलेखन्योपचिकीर्षुः सदुत्सहते सदेति मद्विज्ञोऽन्यः को वाऽधिकं विजानीयात्? विदुषोऽस्य अभिधावृत्तिमातृकाग्रन्थग्रन्थिविभेदनदक्षं मनः शिवसंकल्पमस्त्विति कामयमानो नूतनान्नूतनमेतादृशं सारस्वतनैवेद्यं बुभुक्षाणो वृत्त्या अस्या द्वय्याः साफल्यं समीहमानो वृत्तिकृते शतशो वर्धापनं वितन्वे।

**डॉ. बोधकुमारझाः**

प्रवाचकः, व्याकरणविभागः,राष्ट्रियसंस्कृतसंस्थानम्

मानितविश्वविद्यालयः, भोपालपरिसरः

सम्पादकः, आर्या (संस्कृतत्रैमासिकी), मध्यप्रदेशसंस्कृतबोर्ड

# विषयसूची

# उपोद्धात:

मनुकुलसन्ततिः सन्ततं भोगापवर्गौ सिसाधयिसुः तद्विपर्ययं परिजिहीर्षुश्च सन्निरवधिमहिम्नाऽऽत्मानं विभूषयिषुः श्रेयःप्रेयसोर्मार्गानन्वीष्यन्त्यवाप्यते। तत्र तादृक्संरंभशीलायास्तस्याः शब्दो ह्यनितरसाधारणं साधनं येनासाविदमन्धं तमस्तीर्त्वा लोकयात्रायां प्रवर्तनक्षमा विलोक्यते। शब्दं विना हिं संसारोऽयमसूर्य इव घनान्धकारावृत्तोऽज्ञानतिमिराच्छन्नो विह्वलश्चाभविष्यत्। शब्दो हि प्राणिजातस्य प्राणवायुः; अर्थप्रकाशनपरं परमं ज्योतिः। शब्द एव धर्ममुपदिशति, कामं पूरयति, अर्थं प्रापयति, मोक्षमार्गञ्च दर्शयति। शब्दो हीदृशी चमत्कृतिर्या विप्रकृष्टमपि सन्निकृष्टत्वेन, दवीयांसमपि नेदीयस्त्वेन, भूतञ्च भविष्यन्तञ्च भवन्तमिव भासयन् स्वीयापरिमितभासा विभातितमाम्। अत एव काव्यादर्शप्रणेता मानीषामानदण्डो दण्ड्यपि मण्डयति शब्दतत्त्वं निजवाग्वैभवेन। तद्यथा -

इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।।
इदमन्धं तमः कृत्स्नं जायते भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।(*काव्यादर्शः, १/३,४*)

शब्दादर्थसंप्रत्ययोऽर्थसंप्रत्ययाच्च लोकव्यवहारः प्रवर्तते। शब्दो हि भावाभिव्यक्तेरुत्कृष्टतमं साधनम्। लोकेऽस्मिन् यावन्तोऽर्थास्तावन्तः शब्दाः। तस्मादेव तत्रभवता वैयाकरणप्रवीणेन भर्तृहरिणाऽवादि -

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुबिद्धमिव ज्ञानं सर्वं शब्देन भासते।।[२]

एवं सर्वं ज्ञानं, सर्वा प्रकटता, समस्ता संवित्तिश्च शब्दानुबिद्धाः भासन्तेतमाम्।

शब्दस्य स्वरूपं किमिति विषये दार्शनिका विवदमाना दृश्यन्ते। केचिच्छब्दं द्रव्यमाचक्षते, केचिच्च गुणम्। गुणत्वेऽपि केचन नित्यमपरेऽनित्यमाहुः। आकाशगुणो हि शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक

इति प्राभाकरं दर्शनम्। श्रवणेन्द्रियजन्यो लौकिकप्रत्यक्षः शब्द इति वैशेषिका आमानन्ति। तत्रभवता काणादेन शब्दस्य द्रव्यत्वकर्मत्वे निराकृत्य गुणत्वं प्रतिष्ठितम्। शब्द एकद्रव्यसमवायिकारणतया न द्रव्यम्। शब्दविषयकप्रत्ययस्याचाक्षुषत्वान्न कर्म। कर्माणि हि चक्षुषा गृह्यन्ते; शब्दस्तु न तथा। अतः पारिशेष्यात् स गुण एव।

वक्ता शब्दं प्रयुंक्ते श्रोता च तदर्थान् प्रत्येति। श्रोत्रग्राह्योऽर्थवच्छब्दो द्विधा पदं वाक्यञ्चेति। वैयाकरणास्तु सुप्तिङन्तं पदमित्यनुशासति। एतेन सुप्तिङ्प्रत्ययान्यतरान्तावयवकवर्णसमुदायत्वं पदत्वम्। एवं पदव्युत्पादनपरत्वात् व्याकरणं हि पदशास्त्रमित्युच्यते।

वाक्यवाक्यार्थविचारपरंपरायां मीमांसकाः प्रसिद्धिं भजन्ते। जैमिनिप्रभृतिभिर्मीमांसादर्शनस्याचार्यैः वेदवाक्यमाधारीकृत्य विचाराः प्रवर्तिताः। वेदमपौरुषेयं मन्वाना मीमासकाः शब्दमर्थञ्च नित्यममन्यन्त। तत्र च तैर्नित्यशब्दार्थयोर्मध्ये प्रत्याय्यप्रत्याय्यकभावात्मिका काचिच्छक्तिः स्वीकृता। तदुक्तं जैमिनिना - "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इति (मीमांसासूत्रम्, १/१/५)। अयमर्थः शब्दस्य नित्यस्य वेदवाक्यस्य तद्घटकस्य पदस्य च "अग्निहोत्रं जुहूयात् स्वर्गकामः" इत्यादेः, अर्थेन तत्प्रतिपाद्ययागादिना सह संबन्धः शक्तिरूपः, औत्पत्तिकः स्वाभाविको नित्य इति। उत्पत्तिशब्दोऽत्र स्वभावपरो न जन्यत्वपरः। एवञ्च पूर्वमीमांसायामानुपूर्विविशेषविशिष्टा वर्णा एव शब्दः। यथा गौरिति गकारौकारविसर्जनीया एव शब्द इति भगवानुपवर्षः प्राह। एवं गकारादय एव श्रोत्रग्राह्याः श्रोत्रग्राह्यत्वलक्षणलक्षितानामेव लोके शब्द इत्यभिधीयमानत्वदर्शनाद् गकारादिवर्णानामेव शब्दस्वरूपत्वं सिद्ध्यति। तथा चायमत्र सारो मीमांसादर्शनगतवाक्यवाक्यार्थविचारस्य यत् श्रोत्रग्राह्या वर्णा एव शब्दः। तेषामेवार्थप्रत्याय्यकत्वाद् वाचकत्वम्। ते कण्ठताल्वाद्यभिघातव्यंग्या नित्या विभवश्च। त एव वर्णाः समुदिताः पदवाक्यव्यपदेशभाजोऽर्थप्रत्यायका इति।

एवं शब्दार्थयोर्नित्यत्वं तत्र च संबन्धात्मिकां शक्तिं स्वीकुर्वाणानां मीमांसकानामाद्याचार्यो हि जैमिनिः। तेन च सूत्रात्मको **मीमांसादर्शनमिति** ग्रन्थो व्यरच्यत। ततश्च उपवर्षः (२०० ई.पू.) बभूव, येन तद्वृत्ती रचिता। ततश्च शबरस्वामी (२०० तः १०० ई.पू.) अभूद्येन जैमिनिकृतमीमांसादर्शनम् आधारीकृत्य भाष्यं व्यधायि। तदनंतरं भर्तृमित्रं (३०० तः ६०० ई.), ततः कुमारिलभट्टः (६३० तः ७०० ई.) अवर्तत, येन श्लोकवार्तिकं, तन्त्रवार्तिकं, टुट्टीका चेति ग्रन्था निर्मिताः। ततः प्रभाकरमिश्रः (६५० तः ७२० ई.) प्रादुर्बभूव येन शबरभाष्यमाधारीकृत्य लघ्वी बृहती चेति टीकाग्रन्थौ विरचितौ। तदनु मण्डनमिश्रः (६८० तः ७५० ई.) येन विद्याविवेकं, भावनाविवेकं, मीमांसासूत्रानुक्रमणी, स्फोटसिद्धान्तश्चेति ग्रन्था अरच्यन्त। ततो भट्ट उम्बेकः (६७० तः ७५० ई.) बभूव, यो हि उत्तररामचरितकारो भवभूतिरिति प्रसिद्धः, तेन च श्लोकवार्तिक-भावनाविवेकयोष्टीकाग्रन्थौ लिखितौ। तदनु वाचस्पतिमिश्रादिभिरनेकैर्मनीषिभिः मीमांसादर्शनस्येयं परंपरा सुदीर्घं प्रसारिता।

एवं पूर्वोक्तप्रकारेण मीमांसादर्शने वाक्यवाक्यार्थविचारो वैदिकविधीनामर्थनिर्णयप्रसंगे विहितः। परं लोकेऽपि तदानीं वाल्मीकिव्यासकालिदासादिभिः काव्यानि व्यरच्यन्त। तदा तेषां काव्यानामपि अर्थप्रतीत्यर्थं शब्दशक्तिविचारकल्पनाया आवश्यकता समजनि। तदानीं नवमेशवीयशतके समुत्पन्न आचार्यानन्दवर्धनोऽभिधा-लक्षणा(गुणवृत्ति)-व्यञ्जनाख्याः शब्दशक्तयः काव्यार्थबोधनेऽपेक्षन्त इति स्वीये काव्यशास्त्रीयग्रन्थे ध्वन्यालिके तान् विचारयामास। तत्समकालीन आचार्यो वाचस्पतिमिश्रः शब्दशक्तिविचारप्रसंगे तत्त्वबिन्दुरिति ग्रन्थं निरमायि। ततो मुकुलभट्टेन **अभिधावृत्तिमातृका** इति शब्दशक्तिविषयकः स्वतन्त्रो ग्रन्थो विरचितो यो ह्येतद्विषयकः साहित्यशास्त्रीय आद्यो ग्रन्थः। मुकुलभट्टस्यायं ग्रन्थरुत्तरवर्तिनामाचार्याणां कृते आदर्शरूपेण प्रतिष्ठितो यमनुसृत्य मम्मटेन शब्दव्यापारविचारः, अप्पयदीक्षितेन वृत्तिवार्तिकं, आशाधरभट्टेन

कोविदानन्दः, त्रिवेणिका च, मौनिश्रीकृष्णेन च वृत्तिदीपिका इत्यादयः शब्दशक्तिविषयका ग्रन्था व्यरच्यन्त। एतदतिरिच्य साहित्यव्याकरणमीमांसान्यायादिशास्त्रेषु प्रायः सर्वैराचार्यैर्यथाप्रसंगं शब्दशक्तिर्विचारिता। एवं शब्दशक्तिविषयकविचारो न केवलं मीमांसाशास्त्रे सीमिताऽपि तु साहित्यव्याकरणन्यायादिशास्त्रेष्वपि विस्तृतिमभजत।

**मुकुलभट्टः**

मुकुलभट्टेनाभिधावृत्तिमातृकायां निजपितुर्नाम भट्टकल्लट इति स्वयमेव लिखितम्। तद्यथा -

भट्टकल्लटपुत्रेण मुकुलेन निरूपिता।
सूरिप्रबोधनायेयमभिधावृत्तिमातृका।।इति (*अभिधावृत्तिमातृका १५*)

भट्टकल्लटश्च काश्मीरवासी अवन्तिवर्मणो नृपतेश्च समकालीन आसीदिति राजतरङ्गिण्यां लिखितमस्ति। तथा हि -

अनुग्रहाय लोकानां भट्टश्रीकल्लटादयः।
अवन्तिवर्मणः काले सिद्धाः भुवमवातरन्।।(*राजतरङ्गिणी, ५/६६*)

मुकुलभट्टो मीमांसाव्याकरणतर्कसाहित्यादिशास्त्रेष्वपरिमितपाण्डित्येन विभूषित आसीदिति तदीयशिष्यः काव्यालंकारसूत्रवृत्तिटीकाकारः इन्दुराजः प्रत्यपादयत्। तदुक्तं तेन -

मीमांसासारमेघात्पदजलधिविधोस्तर्कमाणिक्यकोशात्,
साहित्यश्रीमुरारेर्बुधकुसुममधोः सौरिपादाब्जभृङ्गात्।
श्रुत्वा सौजन्यसिन्धोर्द्विजवरमुकुलात्कीर्तिवल्ल्यालबालात्,
काव्यालंकारसारे लघुविवृतिमधात् कौञ्कणः श्रीन्दुराजः।।

(*काव्यालंकारसारसंग्रहस्य लघुविवृतिटीकाया अन्तिमं पद्यमिदम्*)

अयमर्थो मीमांसारूपवृष्टेर्जलदः, व्याकरणाब्धेः चन्द्रः, तर्कमाणिक्यस्य कोशः, साहित्यलक्ष्म्याः मुरारिः, बुधपुष्पाणां मधुमासः, श्रीविष्णुपादकमलस्य भृंगः, सौजन्यस्य च सिन्धुः, कीर्तिलताया आलबालो यो मुकुलभट्टस्तस्मात्

अधीत्य श्रीन्दुराजः काव्यालंकारसारसंग्रहस्य लघुविवृतिं व्यदधात्।

ध्वन्यालोकलोचनटीकाकाराभिनवगुप्तोऽस्यैवेन्दुराजस्य शिष्य आसीदिति स्वयमभिनवगुप्तेन भणितम्। तद्यथा -

मद्देन्दुराजचरणाब्जकृताधिवासो
हृद्यः श्रुतोऽभिनवगुप्तपदाभिधोऽहम्।
यत्किञ्चिदप्यनुरणन्स्फुटयामि काव्या-
लोकं सुलोचननियोजनया जनस्य।।

(*लोचनटीका, पृ. १*)

एतेनेदं निर्विवादं स्वीकर्तुं शक्यते यन्मुकुलभट्टोऽवन्तिवर्मणो नृपतेराश्रिताचार्यस्यानन्दवर्धनस्य परं तथा लोचनकाराभिनवगुप्तस्य पूर्वं बभूव। अवन्तिवर्मणश्च शासनकालः ८५५ ई.वर्षतः ८८३ ई. वर्षपर्यन्तमासीत्। इन्दुराजाभिनवगुप्तयोश्च समयः ९४० ई. वर्षतः ९९० ई.वर्षपर्यन्तमासीत्। एतेनेन्दुराजगुरोर्मुकुलभट्टस्य समयः नवमेशवीयशतकस्यान्तिमे चरणे दशमेशवीयशतकस्याद्ये चरणे (८८३ ई. व. तः ९२५ ई. व. पर्यन्तम्)आसीदिति निश्चप्रचम्।

**अभिधावृत्तिः**

भारतीयवाङ्मये शब्दशक्तिविषये अतीवगहनविचारा दृश्यन्ते। शास्त्राणि स्वस्वसिद्धान्तानुसारं शब्दशक्तिविषयकविचारं प्रस्तुवन्ति विलोक्यन्ते। तत्र केचनाभिधाशक्तिमात्रं स्वीकुर्वन्ति, त्वपरे अभिधां लक्षणां च शब्दशक्तित्वेन स्वीकुर्वन्ति। अन्येऽभिधालक्षणाव्यञ्जनास्तिस्रः शब्दशक्तीः प्रतिपादयन्ति। केचन तात्पर्याख्यां शक्तिमपि शब्दस्य स्वीकुर्वन्ति।

मुकुलभट्टः शब्दस्यैकमेवाभिधाव्यापारं स्वीकरोति। तस्य चाभिधाव्यापारस्य मुख्यो लाक्षणिकश्चेति भेदद्वयं वर्तत इत्यसौ शब्दव्यापारविचारे प्रतिपादयति। यथा तेनोक्तं- “शब्दस्य च मुख्येन

लाक्षणिकेनाभिधाव्यापारेणार्थावगतिहेतुत्वमिति मुख्यलाक्षणिकयोरभिधा-व्यापारयोरत्र विवेकः क्रियते'' (*अभिधावृत्तिमातृका, पृ. १, चौखम्बाविद्याभवनं, वाराणसी, १९७३*)। एवं प्रकारेण मुख्यलाक्षणिकत्वेनाभिधाया भेदद्वयं प्रतिपाद्यासावुभयोर्भेदं निरूपयति। उक्तं च तेन-

शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते।। इति।

(*अभिधावृत्तिमातृका, पृ. १, चौखम्बाविद्याभवनं, वाराणसी, १९७३, का. १*)
तत्रैवासौ कारिकां स्वयमेव व्याख्याति यत्- ''एवमयं मुख्यलाक्षणिकविषयोपवर्णद्वारेण शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो निरन्तरार्थनिष्ठः सान्तरार्थनिष्ठश्च'' (*अभिधावृत्तिमातृका, पृ. १, चौखम्बाविद्याभवनं, वाराणसी, १९७३, पृ. ३*)

एवमुपर्युक्तानुसारं मुकुलभट्टस्य मतेन शब्दोच्चारणानन्तरमव्यवधानेन यस्यार्थस्य प्रतीतिर्भवति स मुख्यार्थः; तत्र च व्यापारोऽभिधाख्य इति। आचार्यमम्मटानुसारं अभिधाया लक्षणं यथा-

साक्षात्संकेतितं योऽर्थमभिधत्ते स वाचकः।
स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते।।

(*काव्यप्रकाशः, २/ ७, ८*)

तत्राचार्यमम्मटः स्वयमेव कारिकां व्याख्यायन् वृत्तौ प्रतिपादयति यत्- ''इहागृहीतसंकेतस्यार्थप्रतीतेरभावात् संकेतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राऽव्यवधानेन संकेतो गृह्यते स तस्य वाचकः'' (*काव्यप्रकाशः, ज्ञानमण्डललिमिटेड्, वाराणसी, १९६०., पृ. ४२*) इति। एतेनाचार्यमम्मटमतं स्पष्टं प्रतीयते यत्- शब्दो यया शक्त्या येन व्यापारेण वाऽव्यवहितं संकेतितार्थं बोधयति सा शक्तिरभिधेत्युच्यते।

साहित्यदर्पणकारो विश्वनाथकविराजो मम्मटसरणिमनुसृत्याभिधां निरूपयति। तथा हि- ''तत्र संकेतितार्थबोधनादग्रिमाऽभिधा'' (*साहित्यदर्पणः, २/४*) इति। ''शक्त्या प्रतिपादकत्वमभिधा'' (*वृत्तिवार्तिकम्, निर्णयसागरप्रेस,*

*मुम्बई, १८९३, पृ. १*) इति वृत्तिवार्तिकेऽप्पयदीक्षितोऽभिधाया लक्षणं निरूपयति। तस्यायमभिप्रायो यत्- शक्त्या नाम वृत्त्या प्रतिपादकत्वमभिधा। अयमर्थोऽप्पयदीक्षितमतस्य यत् प्रतिपाद्यप्रतिपादकसंबन्धविशेषा काचिच्छक्तिरेवाऽभिधापदवाच्या भवति।

पण्डितराजजगन्नाथोक्तमभिधास्वरूपं तावदित्थमस्ति- "शक्त्याख्योऽर्थस्य शब्दगतः शब्दस्यार्थगतो वा संबन्धविशेषोऽभिधा"(*रसगंगाधरः, , चौखम्बाविद्याभवन, वाराणसी, १९७९, २/पृ. १३४*) इति। अयमर्थः पण्डितराजोक्तलक्षणस्य यत् शब्दस्यार्थविषयकोऽर्थस्य वा शब्दविषयकः संबन्धविशेषोऽभिधेति। रसगंगाधरकारोऽभिधायाः स्वानुकूलं लक्षणं निरूप्य वैयाकरणमीमांसकादीनां मतं प्रतिपादयति। तद्यथा- सा च पदार्थान्तरमिति केचित् (*रसगंगाधरः, चौखम्बाविद्याभवन, वाराणसी, १९७९, २/पृ. १३४*) इति। अर्थात् साभिधा न संकेतापरपर्याया ईश्वरेच्छारूपा, अपि तु तदतिरिक्ता एव बोध्यबोधकभावरूपा, बोधकतारूपा, बोध्यतारूपा, शब्दार्थयोस्तादात्म्यरूपा वेति वैयाकरणमीमांसकादय आमनन्ति। नैयायिकानां मतं प्रतिपिपादयिषुः पण्डितराजो वक्ति- "अस्माच्छब्दादयमर्थोऽवगन्तव्य इत्याकारेश्वरेच्छैवाभिधा। तस्याश्च विषयतया सर्वत्र सत्त्वात्पटादीनामपि घटादिपदवाच्यता स्यात्। अतो व्यक्तिविशेषोपधानेन घटादिपदाभिधात्वं वाच्यमित्यपरे" (*रसगंगाधरः, चौखम्बाविद्याभवन, वाराणसी, १९७९, २/ पृ. १३४*) इति।

अस्यायमर्थो यद् 'अस्मात्पदादयमर्थो बोधव्यः' इत्याकारिका शब्दप्रकारिकार्थविशेष्यिका, 'इदं पदममुमर्थं बोधयतु' इत्याकारिकार्थप्रकारिका शब्दविशेष्यिका वा येश्वरेच्छा, तद्रूपः संकेत एवाभिधापदार्थः **न पदार्थान्तरम्**, इति नैयायिका आमनन्ति। तत्र च वस्तुविशेषमुपाधीकृत्येश्वरेच्छाया-स्तत्पदाभिधात्वस्वीकरणेनेश्वरेच्छायाः सर्वविषयत्वेऽपि न घटादौ पटपदवाच्यता स्यादिति तेषां मतम्।

एवमुपर्युक्तप्रकारेण पक्षद्वयमुपस्थाप्य रसगङ्गाधरकारो वैयाकरणमीमांसकाभिमतमभिधास्वरूपं समर्थयन् वक्ति- "एवमपीश्वरज्ञानादिना विनिगमनाविरहः स्यात्, अतः प्रथमं मतमेव न्याय्यमित्यपि वदन्ति" (*रसगंगाधरः, , चौखम्बाविद्याभवन, वाराणसी, १९७९, २/पृ. १३४*) इति। अयमर्थो यथेश्वरेच्छा सर्वविषयिणी नित्या, एका च, तथैवेश्वरज्ञानमपि सर्वविषयमेकं नित्यञ्चेति ईश्वरज्ञानस्याभिधात्वं कुतो नेति विनिगमनाविरहादुभयोरपि अभिधात्वापत्तिगौरवायेति, पदार्थान्तरमेवाभिधा, अर्थात् बोध्यबोधकादिरूपैवाभिधेति पक्षं युक्तमित्यभिदधति तत्त्वविद इति।

उपर्युक्ते मतकदम्बके सूक्ष्मेक्षिकया विचार्यमाणे सति मतद्वैधमभिधाविषयकं प्रस्फूरति- संकेतापरपर्याया ईश्वरेच्छा एवाभिधा उत ईश्वरेच्छाविशिष्टं संकेतितार्थमभिधा बोधयतीति? तत्र वेदानां पौरुषेयताऽपौरुषेयताविषये विचारे प्रस्तुते सति मीमांसादर्शने मीमांसासूत्रे न्यायदर्शनस्य मतं पूर्वपक्षत्वेन प्रस्तूय प्रतिपादितमस्ति- "कर्मैके तत्र दर्शनात्" (*मीमांसासूत्रम्, १/१/६*)इति। अयमर्थो यद् एके नैयायिकाः शब्दार्थयोः संबन्धमनित्यमिच्छन्ति। तेषां मतेन संकेतद्वारा ईश्वरेच्छाया वा शब्दोऽर्थविशेषं प्रतिादयति न तु स्वतः; अतः ईश्वरेच्छा संकेतो वाऽभिधेति तन्मतम्। परन्तु मीमांसादर्शनकारो महर्षिजैमिनिः तन्मतं खण्डयित्वा प्रतिपादयति- "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" (*मीमांसासूत्रम्, १/१/५*)इत्यादि। अर्थात् शब्दार्थयोः संबन्धो नित्यो न त्वनित्यः। तत्र शब्दार्थयोः संबन्धरूपे विचारे प्रस्तुते सति न्यायदर्शनकारो महर्षिगौतमः प्रत्यपादयत्- "न सामयिकत्वाच्छब्दार्थसंप्रत्ययस्य" (*न्यायदर्शनम्, २/१/५६*) इति। अर्थात् समयः संकेतो वा शब्दादर्थप्रतीतिं नियमयति। सामयिकस्यायमभिप्रायो यद् 'अभिधानाभिधेयनियमनियोग' (*न्यायदर्शनस्य वात्स्यायनभाष्यम्, २/१/५६*) इति वात्स्यायनभाष्यानुसारं संगच्छते। अभिधानाभिधेयनियमनियोगस्यार्थः समयः संकेतो वेति न्यायवार्तिकस्य तात्पर्यटीकायां द्रष्टुं शक्यते। तथा हि- "अभिधानाभिधेययोर्नियमो गोशब्दस्य

सास्नादिमानेवार्थ एवमश्वशब्दस्य केशरादिमानेवेति। तस्मिन्नियोगो बोद्धव्य इति भगवतः परमेश्वरस्य सर्गादौ सोऽयं समय" (*न्यायवार्तिकस्य तात्पर्यटीका, २/१/५५*) इति। एतेन अभिधानं = शब्दः, अभिधेयम् = अर्थः, तयोर्नियमः अर्थाद् गोशब्दस्य सास्नादिमत्प्राणिविशेषार्थे यन्नियमनं तद्धि सृष्टेरादावेव भगवता कृतः समयः संकेतो वा। एवं नैयायिकाः संकेतम्, ईश्वरेच्छां वा शक्ति(अभिधा)रूपेणस्वीकुर्वन्ति। परन्तु मीमांसकवैयाकरणाः नैयायिकानां मतमिदमग्राह्यत्वेनोपेक्षन्ते। तेषां मतेन शक्तिः संकेतश्चेति परस्परं भिन्नौ। शक्तिर्नामाभिधा न संकेतरूपाऽपि तु संकेतितमर्थं शक्तिः = अभिधा बोधयति। यथोक्तम् उद्योतकारेण- 'संकेतग्राह्यं शक्त्याख्यपदार्थान्तरमभिधा' (*उद्योतम्, चौखम्बाप्रकाशनम्, १९९५, पृ. ९*) इति। परमलघुमञ्जूषाकारो महावैयाकरणो नागेशभट्टः स्पष्टं प्रतिपादयति- 'उक्त ईश्वरसंकेत एव शक्तिरिति नैयायिकमतं न युक्तम्। अयमेतच्छक्यः अत्रास्य शक्तिः इत्यस्य संकेतस्य शक्तितः पार्थक्येन प्रसिद्धत्वात्' (*परमलघुमञ्जूषा, शक्तिविचारः, पृ. ३, चौखम्बाप्रकाशनम्, १९९१*) इति।

एतेन यया शब्दशक्त्याऽव्यवधानेन संकेतितार्थो बोध्यते सा अभिधेति स्पष्टम्।

तेष्वपि अभिधाविहितसंकेतग्रहविषये भिन्नानि मतानि दृश्यन्ते। तेषामभिधाबोध्यार्थेष्वनेकानि मतानि सन्ति। तानि हि १.जैनानुसारमाकृतिवादः, २. केषाञ्चन नैयायिकानां व्यक्तिवादः, ३. प्राचीननैयायिकानां जात्याकृतिव्यक्तिवादः, ४. बौद्धानामपोहवादः, ५. मीमांसकानां जातिमात्रवादः, ६. महिमभट्टस्य तत्त्वापत्तिरूपक्रियावादः, ७. वैयाकरणसाहित्यिकानाञ्च जातिगुणक्रियायदृच्छावादः। क्रमश एतेषां मतानां प्रतिपाद्यमिह विचार्यते।

१. आकृतिवादः - जैना आकृतावेव संकेतं स्वीकुर्वन्ति। तेषां मतेन कस्यचित् प्रत्यक्षविषयीभूतस्य प्राणिविशेषस्य कृते गो-शब्दः प्रयुज्यते तदा तस्य प्रत्यक्षविषयीभूतस्याकृतिविशेषस्य बोधस्तेन पदेन (गोपदेन)

भवति। तथा तदाकृतिविशिष्टव्यक्त्या सहानयनादिक्रियाः सम्पद्यन्ते। अतः आकृतावेव संकेत इति तेषां मतम्।

२. व्यक्तिवादः - नैयायिकेषु केचनाकृतिवादममुं निराकुर्वन्तो व्यक्तिवादं स्थापयन्ति। तेषां मतेन गोपदोच्चारणेन न गोः चित्रं न वा गोः मृण्मयी आकृतिरानीयते, अपि तु गोव्यक्तिरानीयते। अतः नाकृतिः पदार्थः। उक्तञ्च - "न च गामनयेत्युक्तः सत्यामपि तथाकृतौ, चित्रमृत्स्नामयीं कश्चिद् गामानयति बुद्धिमान्। प्रयोगचोदनासामंजस्यात् व्यक्तिः शब्दार्थः, आलम्भनविश्रंसनप्रोक्षणादिचोदनाः जातावसंगताः भवन्ति......अपि तु व्यक्तिः, तस्मात् सैव पदार्थः।

व्यक्तिरेव पदार्थत्वं तस्मादभ्युपगम्यताम्।
तथा च बुद्धिस्तत्रैव श्रुतशब्दस्य जायते।।" इति।

(*न्यायमञ्जरी, पृ. २९१*)

३. जात्याकृतिव्यक्तिवादः - न्यायसूत्रकारगौतमेन तदनुयायिभिश्च प्राचीनैः जातिम्, आकृतिं, व्यक्तिञ्च यथावसरं पदार्थं मन्यन्ते। तदुक्तं व्यक्त्याकृतिजातयस्तु पदार्थः (*न्यायसूत्रम्, २, १-६३*)। तेऽभिदधति - 'गौः पदा न स्प्रष्टव्याः' इत्यदिधर्मशास्त्रीयवचने गोपदेन गोत्वजातेर्बोधो भवति। गौरनुबन्ध्यः इत्यादिषु शास्त्रीयवचनेषु गामनयादिलौकिकवाक्येषु च गोपदस्यार्थः गोव्यक्तिरूपः। पिष्टकमय्यो गावः क्रियन्ताम् इत्यदिवाक्येषु गोः आकृतिरेव पदार्थः। एवं पूर्वोक्तेषु स्थलेषु क्रमशः जात्याकृतिव्यक्तयः प्राधान्यं भजन्तेऽन्ये च गौणत्वम्। यत्र जातेराकृतेश्च संभावना न भवति तत्र केवलव्यक्तिरेव पदार्थः इति। तदुक्तं 'येषामर्थेषु सामान्यं न संभवति तैः पुनः उच्यते केवला व्यक्तिराकाशादिपदैरिव। एवं डित्थादिशब्दानां संज्ञात्वविदितात्मनाम्। अभिधेयस्य सामान्यशून्यत्वात् व्यक्तिवाचिता' इति (*न्यायमञ्जरी, पृ. २९८*)।

४. अपोहवादः - बौद्धानां मते न जातिः पदार्थः, नापि व्यक्तिः, न च जातिविशिष्टव्यक्तिरपि तु अतद्व्यावृत्तिरेव पदार्थः। तेषां मतेन

नश्वरेऽस्मिन् संसारे सर्वमप्यनित्यम्। अत्र शब्दोऽप्यनित्योऽर्थोऽप्यनित्यः। अतः शब्दात्संकेतोऽप्यभावरूप एव भवेत्। स चापोहः। यथा गौः तद्भिन्नेभ्यः महीषाश्वादीतरप्राणिभ्यः सर्वथा भिन्नः। इयमेवातद्व्यावृत्तिः। तदुक्तम् अत्यन्तं विलक्षणानां स्वालक्षण्यम् अन्यव्यावृत्तिः स्वालक्षण्यम्। यद्भावाभावसामान्यं तदतद्व्यावृत्तिरूपमेव। (*न्यायवार्तिकम्, तात्पर्यटीका, पृ. ४८६*)।

५. जातिमात्रवादः – मीमांसकानुसारं जातावेव संकेतः। तेषां मतेन व्यक्तौ संकेतस्वीकारे व्यक्तीनामानन्त्याद् आनन्त्यदोषः, तथा यस्यां गोव्यक्तौ संकेतो भवति तद्व्यतिरिक्तेऽपि गोव्यक्तौ व्यभिचरतीति व्यभिचारदोषोऽपीति न व्यक्तौ संकेतः। जातिश्च सर्वव्यक्तिष्वेकाकारत्वेन दर्शनाद् जातावेव संकेत इति निर्णीतम्। तदुक्तं – जातिरेव शब्देन प्रतिपाद्यते व्यक्तीनामानन्त्यात् संबन्धग्रहणासंभवात्। सा च जातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीति व्यवसीयते। तत्र गवादयः शब्दाः भिन्नद्रव्यसमवेतां जातिमभिदधति।( *महाभाष्यप्रदीपः*)। अत एवोक्तं श्लोकवार्तिके –

जातिमेवाकृतिं प्राहुः व्यक्तिराक्रियते यथा।
सामान्यं तच्च पिण्डानापन्नबुद्धिनिबन्धनम्।।

(*श्लोकवार्तिकम्, आकृतिवादः*)

६. तत्त्वापत्तिरूपक्रियावादः – व्यक्तिविवेककारो महिमभट्टः तत्त्वापत्तिरूपां क्रियामेव सर्वेषां नामपदानां प्रवृत्तिनिमित्तत्वेन स्वीकरोति। स वदति यद् घटः स्वयमघटन् न घटत्वमाप्तुं शक्नोति। यावद् घटे घटत्वापत्तिक्रिया नोत्पद्यते तावन्न घटो घटपदवाच्यः। अघटत्वविशेषेण पटोऽपि घटपदेनोच्येत। अतः तत्त्वापत्तिरूपा सत्तासादनक्रियैव नामपदानां प्रवृत्तौ निमित्तम्। तदुक्तं तेन – केचित्पुनरेषां क्रियैव प्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमेव सर्वेषां नामपदानामुपगच्छन्ति। तथा हि घटनादिक्रियामेवान्वयव्यतिरेकाभ्यां प्रवृत्तिनिमित्तभावेनावलम्बमाना दृश्यन्ते न च घटत्वादिसामान्यम्। (*व्यक्तिविवेकः, १/पृ.३० चौखम्बासंस्कृतसंस्थान,*

१९७९) । अन्यच्च तेनैवोक्तं -

घटतीति घटो ज्ञेयो नाघटन् घटतामियात्।
अघटत्वाविशेषेण पटोऽपि स्याद् घटोऽन्यथा।।

(*व्यक्तिविवेकः, १/८*)

यः कश्चिदर्थः शब्दानां व्युत्पत्तौ स्यान्निबन्धनम्।
प्रवृत्तौ तु क्रियैवैका सत्तासादनलक्षणा।। इति।

(*व्यक्तिविवेकः, १/१०*)

७. जात्यदिचतुष्टयवादः - वैयाकरणाः शब्दस्य संकेतं जातौ, गुणे, क्रियायां, यदृच्छायाञ्च चतुर्षु स्वीकुर्वन्ति। तदुक्तं महाभाष्यकारेण भगवता पतञ्जलिना - चतुष्टयी हि शब्दानां प्रवृत्तिः। जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा, यदृच्छाशब्दाश्चतुर्थाः।(महाभाष्यं, ऋलृक्-सूत्रभाष्यं, १.१.२.२)

आचार्यमुकुलभट्टस्तथा काव्यशास्त्रस्य प्रायः सर्वेऽप्याचार्या वैयाकरणानाममुं सिद्धान्तं स्वीकुर्वन्ति। तदुक्तं तेन -

"तत्र मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदतः।

तयोर्मुख्यलाक्षणिकयोरर्थयोर्मध्यान्मुख्यार्थस्य चत्वारो भेदाः, जात्यादिभेदात्। चतुष्टयी हि शब्दानां प्रवृत्तिर्भगवता महाभाष्यकारेणोपवर्णिता 'जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चे'-ति।" काव्यप्रकाशकार आचार्यमम्मटोऽपि जात्यादिषु चतुर्षु संकेतं स्वीकुर्वन् प्रतिपादयति - "यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथापि आनन्त्याद् व्यभिचाराच्च तत्र संकेतः कर्तुं न युज्यते इति, 'गौः शुक्लश्चलो डित्थः' इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधौ एव संकेतः ........................'गौः शुक्लश्चलो डित्थः' इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिरिति महाभाष्यकारः।" (*काव्यप्रकाशः २, पृ.३९-४२*),

मोतिलालबनारसीदास, दिल्ली, इति। साहित्यदर्पणकार आचार्यविश्वनाथोऽपि स्पष्टं जात्यादिचतुष्टये संकेतं प्रतिपादयन् वक्ति 'संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च ।।' (*साहित्यदर्पण:, २/४*)इति। एवमाचार्यमुकुलभट्टत आरभ्य सर्वेऽपि साहित्यशास्त्रस्याचार्या जात्यादिपक्षचतुषटये संकेतं स्वीकुर्वन्तीत्यलं विस्तरेण।

**लक्षणा** -

संस्कृतवाङ्मये लक्षणाशक्तेः प्रचलनं ब्राह्मणयुगादारभ्य वर्तते। सा च लक्षणा क्वचिद् भक्तिपदेन, क्वचिद् गौणीपदेन, क्वचिच्चोपचारपदेनोक्ताऽस्ति। निरुक्तानुसारं ब्राह्मणग्रन्थेषु लक्षणाया बहुलाश्रयः प्रतिपादितः। तथा हि तत्रोक्तं- 'बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति' (*निरुक्तं, ७/ पृ. ३७२*)। न्यायदर्शनकारो गौतमोऽपि उपचारस्य प्रयोगं दर्शयति। यथा- 'सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोग-साधनाऽधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाकटान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः' (*न्यायदर्शनम्, २/२/६३*) इति। एवं प्रकारेण प्राचीनकालेऽपि लक्षणायाः कृते भक्तिः, उपचारश्चेत्यादयः शब्दाः प्रचलिता आसन्। परन्तु लक्षणास्वरूपनिरूपणप्रसंगे सर्वादौ मुकुलभट्टेन प्रतिपादितम्- यः साक्षात् शब्दोच्चरणादेव प्रतीयते स मुख्यार्थः यश्च मुख्यार्थप्रतीतेरनन्तरं प्रतीयते स लक्ष्यार्थ उच्यते। यथा-

शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते।। इति।

(*अभिधावृत्तिमातृका, १*)

**मुकुलभट्टोऽभिधाया एव भेदत्वेन लक्षणां प्रतिपाद्य यत्र शब्दप्रतीत्यनन्तरमव्यवधानेनार्थः प्रतीयतेऽसौ मुख्यो व्यापारः, यत्र च शब्दोच्चारणलक्ष्यार्थप्रतीत्योर्मध्ये वाच्यार्थो व्यवधानरूपेणायाति तत्र व्यापारस्य लाक्षणिकत्वम्।** उक्तञ्च तेन- 'एवमयं मुख्यलाक्षणिकविषयोपवर्ण्यद्वारेण शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो

निरन्तरार्थविषयः सान्तरार्थनिष्ठश्च' (*अभिधावृत्तिमातृका, पृ. १, चौखम्बाविद्याभवनं, वाराणसी, १९७३*)। काव्यप्रकाशकार आचार्यमम्मटो लक्षणाया निरूपणमेवं करोति-

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया।।

(*काव्यप्रकाशः, २/२*)

अयमर्थो यद् यदा मुख्यार्थस्य बाधो भवति, अपरञ्च तत्राऽपि मुख्यार्थलक्ष्यार्थयोः सम्बन्धे सति, रूढिप्रयोजनयोरन्यतरस्य च सद्भावे सा शब्दे आरोपिता क्रिया लक्षणा नामेति। एवं प्रकारेणाचार्यमम्मटो लक्षणायाः कारणत्रयं स्वीकरोति- (१) मुख्यार्थबाधः, (२) मुख्यार्थेन सहान्यार्थस्य (लक्ष्यार्थस्य) सम्बन्धः, (३)रूढिप्रयोजनयोरन्यतरश्चेति। मम्मटानुसारं लक्षणा वस्तुतोऽर्थव्यापारः, परन्तु शब्दे साऽऽरोप्यते। उक्तं हि तेन वृत्तावपि- 'मुख्येनामुख्योऽर्थो लक्ष्यते यत्स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा' (*काव्यप्रकाशः, ज्ञानमण्डललिमिटेड्, वाराणसी, १९६०., पृ. ५२*) इति। एवमुपर्युक्तप्रकारेणाऽऽचार्यमम्मटस्य लक्षणाविषयकं मतं यद्यपि मुकुलभट्टद्वारा प्रभावितं तथापि मम्मटमते अधिका स्पष्टता दृश्यते। तदनु साहित्यदर्पणकारो विश्वनाथकविराजो मम्मटमतमेवानुसृत्य लक्षणानिरूपणं करोति-

मुख्यार्थबाधे तद्युक्तो ययाऽन्योर्थः प्रतीयते।
रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता।।

(*साहित्यदर्पणः, २/५*)

विश्वनाथकविराजः स्पष्टतो लक्षणां शब्दस्यार्पितां शक्तिमर्थात् स्वाभाविकेतरां स्वीकरोति। उक्तं हि तेन वृत्तौ- 'कलिङ्गः साहसिक' इत्यादौ कलिङ्गशब्दो देशविशेषरूपे स्वार्थेऽसम्भवन् यया शब्दशक्त्या स्वसंयुक्तपुरुषादीन् प्रत्याययति, यया च 'गङ्गायां घोष' इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतेऽसम्भवन् स्वस्य सामीप्यादिसंबन्धसंबन्धिनं तटादिं बोधयति, सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा

शक्तिर्लक्षणा नाम (*साहित्यदर्पणः १/पृ. ४९-५०, चौखम्बाविद्याभवन, वाराणसी, १९८२*)।

वृत्तिवार्तिककारोऽप्पयदीक्षितो लक्षणायाः स्वरूपमेवं निरूपयति- 'अथ लक्षणा निरूप्यते। सा च मुख्यार्थसंबन्धेन शब्दस्य प्रातिपदिकत्त्वम्' (*वृत्तिवार्तिकम्, पृ. १५*) इति। अयमर्थो यया शक्त्या शब्दो मुख्यार्थसंबन्धिनमर्थान्तरं प्रतिपादयति सा लक्षणेत्यप्पयदीक्षितमतसारः। परन्तु नेदं मतं स्पष्टं मुख्यार्थबाधादिकारणविरहितत्वात्। रसगंगाधरकारपण्डितराजजगन्नाथानुसारं लक्षणास्वरूपं यथा- 'शक्यसंबन्धो लक्षणा' (*रसगंगाधरः, चौखम्बाविद्याभवन, वाराणसी, १९७९, २/पृ. १६२*) अर्थात् शक्यार्थस्य वाच्यार्थस्य, पदार्थान्तरेण सह यः संबन्धः सा लक्षणेति। एवं लक्षणाया लक्षणं निरूप्य तस्याः कारणं निरूपयन् वक्ति- "तस्याश्चार्थोपस्थापकत्वे मुख्यार्थतावच्छेदके तात्पर्यविषयाऽन्वयिताया अभावो न तन्त्रम्। शक्यतावच्छेदकरूपेण लक्ष्यमाणस्य स्वीकारात्। किन्तु तात्पर्यविषयान्वये मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया अभावो रूढिप्रयोजनयोरन्यतरच्च तन्त्रम्। मुख्यार्थान्वयानुपपत्तेः तन्त्रत्वे तु 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र लक्षणोत्थानं न स्यात्" (*रसगंगाधरः, , चौखम्बाविद्याभवन, वाराणसी, १९७९, २/पृ. १६२*) इति।

अयमभिप्रायो जगन्नाथस्य यद्- अन्वयानुपपत्तितात्पर्यानुपपत्त्योर्लक्षणाबीजत्वेनान्वयानुपपत्तेर्ग्रहणेन 'काकेभ्यो दधि रक्ष्यताम्' इत्यत्र लक्षणायाः व्याप्तिर्न भवति, अन्वयस्योपपन्नत्वात्। अत एव तात्पर्यानुपपत्तिर्लक्षणाबीजत्वेन ग्राह्या। तत्र च तात्पर्यानुपपत्तेर्लक्षणाबीजत्वेन स्वीकारेऽपि 'मुख्यार्थतावच्छेदकाधिकरणकस्तात्पर्यविषयान्वयितावच्छेदकताया अभावः' तात्पर्यविषयान्वयाधिकरणको मुख्यार्थतावच्छेदकरूपेण मुख्यार्थप्रतियोगिकताया अभावो वा तात्पर्यानुपपत्तिपदार्थ इति मतद्वये संभाविते प्रथमं न युक्तम्; 'गङ्गायां घोष' इत्यादौ प्रसिद्धे लक्षणोदाहरणे शैत्यपावनत्वादिफलव्यंजनसौविध्याय गङ्गात्वेनैव रूपेण तटबोधस्यालङ्कारिकैः

स्वीकारेण गङ्गात्वाभावे लक्षणाविरहप्रसंगात्। तत्र तात्पर्यविषयीभूतः संबन्धः, तटघोषयोराधाराधेयभावः, तन्नियामकः संयोगो वा तद्विशिष्टता तटे। एवञ्च तटनिष्ठायास्तादृशान्वयिताया अवच्छेदकता मुख्यार्थतावच्छेदके गङ्गात्वे एवेति न तदभावः कारणत्वेनाभिमतः स्यादेव। अतो द्वितीयं मतमेव सम्यक्। तथा च तत्र गंगात्वेन रूपेण तटभानेऽपि तात्पर्यविषयीभूतस्य उक्ताधाराधेयभावात्मकस्यान्वयस्य गङ्गात्वेन रूपेण तटप्रतियोगिकतायास्तस्मिन्नन्वये गङ्गारूपमुख्यार्थप्रतियोगिकताया अभावस्य वर्तमानतया रूढिप्रयोजनयोरन्यतरस्य शैत्यपावनत्वादेश्च सत्त्वेन लक्षणा भवतीति। अयमत्र सारो **गङ्गात्वाभाव एव न तात्पर्यानुपपत्तिपदार्थोऽपि तु तटत्वाभाव एव** इति।

उपर्युक्तालोचनस्य परिशीलनेनैवं प्रतीयते पण्डितराजस्य लक्षणाविषयको विचारो यत्- मुख्यार्थस्य तात्पर्यानुपपत्तौ, रूढिप्रयोजनयोरन्यतरस्य च सद्भावे, वाच्यार्थेन सह यः संबन्धः स एव लक्षणाव्यापार इति।

पण्डितराजजगन्नाथस्य लक्षणाविषयकविचारेण वैयाकरणो नागेशभट्टोऽपि सम्मतोऽस्तीति तदीयग्रन्थपरिशीलनेन प्रतीयते। उक्तं हि तेन- "अन्वयानुपपत्तिप्रतिसंधानञ्च लक्षणाबीजम्। वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसंधानमेव तद्बीजम्। अन्यथा 'गंगायां घोष' इत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिस्तावताऽप्यन्वयानुपपत्तिपरिहारात्। 'गङ्गायां पापी गच्छति' इत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च। अस्माकन्तु भूतपूर्वपापावच्छिन्नलक्षकत्वे तात्पर्यान्न दोषः। नक्षत्रं दृष्ट्वा वाचं विसृजेत् इत्यत्रान्वयसंभवेऽपि तात्पर्यानुपपत्त्यैव लक्षणास्वीकारात्। एकानुगमकस्वीकारेण निर्वाहे अनेकानुगमकस्वीकारे गौरवाच्च" (*परमलघुमञ्जूषा/ लक्षणानिरूपणम्/ पृ. ६३, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २००१*)।

उपर्युक्तप्रकारेण अन्वयानुपपत्तिः लक्षणाबीजमिति नैयायिकमतेऽरुचिं प्रदर्श्य तात्पर्यानुपपत्तिं लक्षणाबीजत्वेन स्थापयति। अन्वयानुपपत्तिमात्रस्य लक्षणाबीजत्वेन स्वीकारे 'गङ्गायां घोष' इत्यत्र घोषपदे मकरादिलक्षणेऽपि लक्षणासिद्धिः स्यात्। तथैव नक्षत्रं दृष्ट्वा वाचं विसृजेत् इत्यत्र यदा कदा दिवापि खग्राससूर्यग्रहणादौ नक्षत्रदर्शनसंभवात् अन्वयानुपपत्तिग्रहणे तदापत्तिः स्यात्। वक्तुस्तात्पर्यानुसारं मौनभङ्गस्तु रात्रावेव निर्दिष्टः। अतस्तात्पर्याऽनुपपत्तिर्लक्षणाबीजम्। अपरञ्च तात्पर्यानुपपत्तेर्लक्षणाबीजत्वेन स्वीकारेऽपि न कार्यसिद्धिः, आयुर्वै घृतम् इत्यत्र घृतस्यायुष्कारणत्वरूपस्य तात्पर्यस्योपपत्तिस्तु भवत्येव, परन्तु आयुर्घृतयोर्भिन्नपदार्थयोः समानाधिकरणतया प्रतिपादितत्वात् नान्वयोपपत्तिरिति अन्वयानुपपत्तिं केचन लक्षणाबीजरूपेण स्वीकुर्वन्ति। वयं तु 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ आयुर्घृतमित्यादौ चोभयत्र लक्षणासंगमनार्थं तात्पर्यानुपपत्त्यन्वयानुपपत्ती उभावपि स्थलविशेषेण लक्षणाया बीजरूपेण स्वीकर्तव्ये इति प्रतीमः।

**लक्षणाभेदाः -**

मुकुलभट्टेन लक्षणायाः प्रथमं शुद्धा उपचारमिश्रा चेति भेदद्वयं प्रतिपादितम्। तत्र तेनोपचारस्यार्थं प्रकाशयतोक्तं - "उपचारमिश्रा तु यत्र वस्त्वन्तरं वस्त्वन्तरे उपचर्यते यथा - 'गौर्वाहीक' इति। अत्र हि गोशब्दो वाहीकशब्देनानुपपद्यमानसामानाधिकरण्याद् बाधितमुख्यार्थः सन् गोगता ये जाड्यमान्द्यादयो गुणाः, तत्सदृशवाहीकगतजाड्यमान्द्यादि-गुणलक्षणद्वारेण गोगतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादिगुणोपेते वाहीक उपचरितः। तेनेयमुपचारमिश्रा लक्षणा।" इति। एतेनोपचारो नाम **आरोपः**। यथा यथा 'गौर्वाहीक' इत्यत्र वाहीके गोत्वारोपः, 'आयुर्घृतम्' इत्यत्र घृते आयुष आरोपः। 'गङ्गायां घोष' इत्यत्र तु तादृशारोपासंभवान्नोपचारोऽपि तु शुद्धेयं लक्षणा। मुकुलभट्टेन शुद्धालक्षणाया अपि उपादानलक्षणालक्षणलक्षणेति भेदद्वयं प्रतिपादितम्। अपरञ्चोपचारमिश्रालक्षणाया शुद्धगौणोपचारत्वेन पुनरपि भेदद्वयं प्रतिपाद्य तयोरपि सारोपासाध्यवसानात्त्वेन पुनरपि दौ भेदावुक्तौ।

वाच्यलक्ष्ययोरुपमानोपमेयभावाभावात् कार्यकारणसंबन्धपूर्वक आरोपस्तत्र शुद्धोपचारः। यत्र च वाच्यलक्ष्ययोरुपमानोपमेयभावसंभवात् सादृश्यसंबन्धपूर्वक आरोपस्तत्र गौणोपचारः। तदुक्तं - "द्विविधः उपचारः शुद्धो गौणश्च। तत्र शुद्धो यत्र मूलभूतस्योपमानोपमेयभावस्याभावेनोपमानगतगुणसदृश-गुणयोगलक्षणाऽसंभवात् कार्यकारणभावादिसंबन्धाल्लक्षणया वस्त्वन्तरे वस्त्वन्तरमुपचर्यते, यथा 'आयुर्घृतमि'ति।........गौणः पुनरुपचारो यत्र मूलभूतोपमानोपमेयभावसमाश्रयेणोपमानगतगुणसदृशगुणयोगलक्षणां पुरःसरीकृत्योपमेय उपमानशब्दस्तदर्थश्चाध्यारोप्यते। स हि गुणेभ्य आगतत्वाद् गौणशब्देनाभिधीयते।" इति। तथा यत्रारोप्यमाणे आरोपविषयस्य भेदमनपह्नुत्यारोपस्तत्र अध्यारोपः। यथा - आयुर्घृतम् इत्यत्र। यत्र चारोप्यमाणे आरोपविषयस्य भेदापह्नवपूर्वकमारोपस्तत्र अध्यवसानम्। यथा - पञ्चाला इत्यत्र। तदुक्तं - "यत्राध्यारोप्यारोपविषययोर्भेदमनपह्नुत्यैव वस्त्वन्तरे वस्त्वन्तरमुपचर्यते तत्रानपह्नुतस्वरूप एव वस्त्वन्तरे वस्त्वन्तरस्याधिकस्या-ऽऽरोप्यमाणत्वादध्यारोप..........यत्र तूपचर्यमाणविषयस्यो-पचर्यमाणेऽन्तर्लीनतया विवक्षितत्वात् स्वरूपापह्नवः क्रियते तत्राध्यवसानम्।" इति। मुकुलभट्टानुसारं लक्षणाया निम्नप्रकारेण षट् प्रकारा भवन्ति -

१. उपादानलक्षणा,

२. लक्षणलक्षणा,

३. सारोपा शुद्धोपचारा,

४. साध्यवसाना शुद्धोपचारा,

५. सारोपा गौणोपचारा,

६. साध्यवसाना गौणोपचारा।

अत्रेदमवधार्य यन्मुकुलभट्टस्येयं लक्षणाऽभिधावृत्तेरेवाङ्गभूता। नासौ लक्षणां स्वतन्त्रवृत्तिरूपेण स्वीकरोति।

**मम्मट-मुकुलभट्टयोः लक्षणाविषयको मतभेदः -**

काव्यप्रकाशकारान्मम्मटान्मुकुलभट्टस्य लक्षणाविषयकमतभेदा दृश्यन्ते। ते च निम्नवद्भवन्ति। तथाहि -

'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र रात्रिभोजनं न लक्षणाबोध्यमिति मम्मटादय आचार्या आमनन्ति। तदनुसारमत्र रात्रिभोजनं श्रुतार्थापत्त्याऽर्थापत्त्या वा भवति, न तु लक्षणाद्वारा, यतो हि लक्षणानिमित्तं रूढिप्रयोजनयोरन्यतरस्य सद्भावोऽपेक्षते। तदुक्तं मम्मटेन 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते, श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वादिति (*काव्यप्रकाशः, द्वितीयोल्लासः, पृ. ५७, ज्ञानमण्डललिमिटेड, वाराणसी, वि. संवत् २०४०*)। तथैव 'गौरनुबन्ध्यः' इत्यत्रापि लक्षणास्वीकारो न मम्मटाभिमतः. जातिव्यक्त्योरविनाभावसंबन्धात् जात्या व्यक्तिः स्वत एवाक्षिप्यते, तदर्थं च लक्षणास्वीकारोऽनुचितो गौरवान्मानाभावाच्च। तदुक्तं तेन- "गौरनुबन्ध्यः इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायात्। इत्युपादानलक्षणा तु नोदाहर्तव्या। न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते" (*काव्यप्रकाशः, द्वितीयोल्लासः, पृ. ५५, ज्ञानमण्डललिमिटेड, वाराणसी, वि. संवत् २०४०*) इति। 'गङ्गायां घोष' इत्यत्र च भेदरूपं ताटस्थ्यं नाचार्यमम्मटस्य संमतम्। यतो हि शीतत्वपावनत्वरूपप्रयोजनप्रतिपत्तये एवात्र लाक्षणिकशब्दस्य प्रयोगः कृतः। अपरञ्चात्र लक्ष्यलक्षकयोः तटगङ्गाप्रवाहयोः भेदरूपताटस्थ्यस्वीकारे न प्रतिपिपादयिषितप्रयोजनसंप्रत्ययो भवेत्। तथा सति 'गङ्गातटे घोष' इति वाचकशब्दप्रयोग एव वरम्, न पुनर्लाक्षणिकस्य। तदुक्तमाचार्यमम्मटेन "अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां हि गङ्गादिशब्दैः प्रतिपादने तत्त्वापत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः। गङ्गासंबन्धमात्रप्रतीतौ तु गङ्गातटे घोषः इति मुख्यशब्दाभिधानाल्लक्षणायाः

को भेदः?" (*काव्यप्रकाशः, द्वितीयोल्लासः, पृ. ६३, ज्ञानमण्डललिमिटेड, वाराणसी, वि. संवत् २०४०*) मुकुलभट्टस्तु केवलं प्रवाहविशेषं प्रतिपादयितुं गङ्गाभिन्नवितस्तादिनदीं व्यावर्तयितुं गङ्गापदस्य प्रयोगमकार्षीत्, न तस्य शीतत्वपावनत्वप्रयोजनमत्राभीष्टम्। अतस्तेनोक्तं गङ्गायां घोषो न वितस्तायामिति गङ्गाशब्दे प्रयुज्यमाने तटस्य स्रोतोविशेषेणोपलक्षकत्व-मात्रोपयुक्तत्वेनोपरागो न प्रतीयते इति।

मुकुलभट्टेन 'गङ्गायां घोष' इति शुद्धालक्षणलक्षणायाः, अध्यारोपस्य, अध्यवसानस्य चेति त्रितयस्योदाहरणरूपेणोपन्यस्तम्। 'गङ्गायां घोष' इत्यादौ वितस्तानदीव्यावर्तनमात्रप्रतीतिस्थले शुद्धालक्षणलक्षणा, गङ्गासम्बद्धतटप्रतीतिस्थले अध्यारोपः, गङ्गात्वमात्रप्रतीतिस्थले गङ्गाप्रवाहस्यात्यन्तसामीप्यबोधार्थं तु अध्यवसानमिति तन्मतसारः। आचार्यमम्मटमतानुसारं तु गङ्गासम्बन्धमात्रमेव लाक्षणिकप्रयोगप्रतिपादनप्रयोजनम्। यतो हि गङ्गासंबन्धप्रतिपादनेनैव शीतत्वपावनत्वादिप्रयोजनप्रतीतिः नान्यथा।

**आनन्दवर्धन-मुकुलभट्टयोः लक्षणाविषयको मतभेदः** -

आचार्यानन्दवर्धनोऽविवक्षितवाच्यध्वनेरेवाऽर्थान्तरसंक्रमित-वाच्याऽत्यन्ततिरस्कृतवाच्यत्वेन द्वैविध्यं प्रत्यपादयत्। तथा हि तेनोक्तं -

अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्।

अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम्।।(*ध्वन्यालोकः, २/२३*)

तथाऽसावविवक्षितवाच्यमेव लक्षणामूलत्वेन प्रतिपाद्य तत्रैव लक्षणायाः सत्तां स्वीकरोति। परं मुकुलभट्टो विवक्षितवाच्यं लक्षणाभेदत्वेन प्रतिपादयति। तदुक्तं तेन- "संबन्धसमवाययोस्तु वाच्यस्य विवक्षितत्वाविवक्षितत्वेन तस्य नात्यन्तं तिरस्कारः। तत्र (सम्बन्धे) हि उपदानात्मिकायां लक्षणायामुपादाने वाच्यविवक्षायां वाच्यस्य विवक्षितत्वम्। तथा हि - तत्र विवक्षितान्यपरता सहृदयैः काव्यवर्त्मनि निरूपिता, वाच्यस्यार्थान्तरसंक्रमितत्वात्। तथा हि यत्रार्थान्तरसंक्रमितवाच्यता तत्र संबन्धनिबन्धनायां लक्षणायामुपादाने

वाच्यविवक्षायामुदाहरणं - 'पीनो देवदत्तो दिवा न भुंक्ते' इति। अत्र हि दिनाधिकरणभोजनाभावविशिष्टतया पीनत्वलक्षणं कार्यं विवक्षितमेव सत् स्वसिद्ध्यर्थत्वेन संबन्धनिबन्धनायां लक्षणायां रात्रिभोजनात्मकं कारणमाक्षिपति।" (अभिधावृत्तमातृका, पृ.७५)

मुकुलभट्ट उपादानलक्षणायां वाच्यस्य विवक्षितत्वं लक्षणलक्षणायाञ्च तस्याविवक्षितत्वं प्रतिपादयति। आनन्दवर्धनस्तु काव्यस्य विवक्षितान्यपरवाच्यं (अभिधामूलम्), अविवक्षितवाच्यं (लक्षणामूलम्) इति भेदद्वयं प्रतिपाद्य लक्षणामूल एवाविवक्षितत्वं वाच्यस्य स्वीकरोति, न त्वभिधामूले कथमपि।

## व्यञ्जनानिरूपणम्

अभिधाशक्तिः प्रायः सर्वैः प्राच्यैः विद्वद्भिर्मुक्तकण्ठं स्वीक्रियते। नैयायिका मीमांसकाश्च लक्षणाशक्तिमपि स्वीकुर्वन्ति। परन्तु व्यञ्जनाशक्तौ प्राच्यशास्त्रिषु साहित्यिका एव बद्धादरा दृश्यन्ते। यतो हि व्यञ्जनाशक्तिप्रतिपाद्यव्यंग्य एव काव्यस्य साहित्यशास्त्रस्य चाधारस्तम्भभूतः। सहृदयहृदयसंवेद्यं प्रतीयमानं हि वस्तु काव्यस्य सारभूतं तत्त्वम्। तच्च प्रतीयमानं नाभिधया न वा लक्षणया शक्त्या बोद्धुं शक्यम्। अतो व्यञ्जनैवैका शक्तिर्यत्तत्त्वं बोधयोतुं शक्या। साहित्यशास्त्रस्याद्यग्रन्थे नाट्यशास्त्रे आचार्यभरतेन यद्यपि व्यञ्जनाव्यापारस्य स्पष्टोल्लेखो नैव विहितः; तथापि नाट्ये मुख्यतयाऽऽस्वाद्यमानस्य रसस्य व्यंग्यत्वं न केनापि निराकर्तुं शक्यते, यस्य प्रतिपादनं 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरि'ति (नाट्यशास्त्रम्, भारतीयविद्याप्रकाशन, दिल्ली,१९८३,६/पृ. ९३)रससूत्रमुल्लिखताऽऽचार्यभरतेन स्वीये नाट्यशास्त्रे विहितम्। तेन च रसस्य सर्वश्रेष्ठप्रतिपाद्यत्वं प्रतिपादयतोक्तम्- 'न हि रसादृते कश्चिदर्थः प्रवर्तते इति' (तत्रैव, पृ. ९२)इति। तदनु दण्डि-भामहोद्भटभोजादिभिः पर्यायोक्तादिष्वलङ्कारेषु व्यंग्यार्थस्य सत्ता स्वीकृताऽऽसीत्। परन्तु व्यंग्यस्य

व्यञ्जनायाश्च प्रतिष्ठाऽऽचार्येणानन्दवर्धनेन सर्वप्रथमं विहिता। तथा हि-

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।

यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।

(ध्वन्यालोकः, १/४) इति।

परमिदं प्रतीयमानतत्त्वं न काल्पनिकं न वाऽपूर्वमपि तु वैयाकरणादयोऽन्येऽपि विद्वांसो व्यञ्जकत्वसाम्यात् श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। उक्तञ्च तेन- प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्। ते च श्रूयमाणेषु वर्णेषु ध्वनिरिति व्यवहरन्ति। तथैवान्यैस्तन्मतानुसारिभिः सूरिभिः काव्यतत्त्वार्थदर्शिभिः वाच्यवाचकसम्मिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः (ध्वन्यालोकः, चौखम्बासंस्कृतसीरीज आँफिस, वाराणसी, १९७९, पृ.-६६)। व्याकरणशास्त्रे हि शब्दो ध्वनिरित्युच्यते। उक्तञ्च महाभाष्यकारेण पतञ्जलिना- 'अथवा प्रतीतपदार्थको लोके ध्वनिश्शब्द उच्यते' (व्याकरणमहाभाष्यम् / पष्पशाह्निकम्, १/१/१/ पृ. १९) इति। वाक्यपदीये चोक्तं भर्तृहरिणा-

"यः संयोगवियोगाभ्यां करणैरुपजन्यते।

सः स्फोटश्शब्दजाश्शब्दो ध्वनयोऽन्यैरुदाहृताः।।

प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा।

ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते।।

शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभदास्तु वैकृताः।

ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते।।" इति।

(वाक्यपदीयम्,ब्रह्मकाण्डम्, १०१,८२,७६ कारिकाः, चौखम्बा विद्या भवनम्, वाराणसी, १९९०) अर्थाद् वर्णा आविर्भूताः सन्तास्तिरोहीयन्ते। अतोऽनेकवर्णात्मकपदप्रत्यक्षं दुर्घटम्। यस्मान्मध्यमानादाभिव्यंग्यं

नित्यमखण्डात्मकं शब्दस्वरूपं शाब्दबोधोपयोगिनं स्फोटं व्यंजकं मध्यमानादरूपश्च ध्वनिरिति भर्तृहरेराशयः। एवं वैयाकरणानां नित्यानित्यशब्दयोः व्यंग्यव्यञ्जकसाम्यात् काव्येऽपि व्यंग्यार्थस्य व्यञ्जकं शब्दमर्थञ्च ध्वनिरिति वदन्ति साहित्यिकाः। इदमेव व्यञ्जनाव्यापारस्य मूलस्रोतः। ततो ध्वन्यालोककारानन्दवर्धनाचार्यात्परं मम्मटविश्वनाथ-जगन्नाथादयोऽन्ये साहित्यशास्त्रिणो व्यञ्जनाव्यापारं समर्थयन्ति। परन्तु महिमभट्टधनञ्जयधनिकादयस्तस्या विरोधमपि कुर्वन्ति।

व्यक्तिविवेककारो महिमभट्टः शब्दस्यैकमेवाऽभिधाव्यापारं स्वीकरोति। उक्तञ्च तेन- 'शब्दः पुनरनुपादेय एव। तस्य स्वार्थाभिधानमन्तरेण व्यापारन्तरा-ऽनुपपत्तेरुपपादयिष्यमाणत्वात्' (व्यक्तिविवेकः, १/ पृ. १६, चौखम्बा संस्कृत संस्थान, १९७९) । अर्थस्य वाच्यानुमेयत्वेन द्वैविध्यं प्रतिपादयन्नसौ वाच्यार्थस्याभिधाबोध्यत्वम्, अनुमेयार्थस्य च वाच्यार्थद्वारेणानुमितिर्भवतीति प्रतिपादयति। उक्तं हि तेन- अर्थोऽपि द्विविधो वाच्योऽनुमेयश्च। तत्र शब्दव्यापारविषयो वाच्यः। स एव मुख्य उच्यते। यदाहुः-

"श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते।
तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम्।। इति।

तत एव तदनुमिताद्वा लिङ्गभूताद्यदर्थान्तरमनुमीयते सोऽनुमेयः" (तत्रैव, १/ पृ. ४७) इति। तन्मतेनानुमेयार्थस्तु त्रिविधः- वस्त्वलङ्काररसरूपः। वाच्यार्थः लिङ्गरूपः सन् लिङ्गिरूपं वस्त्वलङ्काररसान्यतममनुमेयार्थमनुमापयति। यतो हि वाच्यानुमेययोः सदैव साधनसाध्यभावो भवति।

रसादिव्यंग्येऽपि वाच्यव्यंग्ययोः क्रमोऽवश्यमस्ति, स च क्रमो लाघवान्न लक्ष्यते। सति च क्रमे वाच्यस्य व्यंग्यं प्रति लिङ्गत्त्वमुपपन्नं भवति। उपपन्ने च लिङ्गे रसादिव्यंग्यस्यानुमेयत्वं कथं वारयितुं शक्यत इति महिमभट्टः पूर्वपक्षमतोपस्थापनपूर्वकं स्वमतं सप्रमाणं द्रढयति। तथा हि-

"उच्यते। वाच्यप्रतीयमानयोरर्थयोर्यथा क्रमेणैव प्रतीतिर्न समकालं यथा चानयोर्गम्यगमकभावस्तथा तेनैव व्यक्तिवादिना तयोः स्वरूपं निरूपयितुकामेनाप्युक्तं, तदेवास्माभिः समाधित्सुभिरिह लिख्यते परम्।

तद्यथा- 'न हि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः। अत एव विभावादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेनावस्थानात् क्रमोऽवश्यंभावी। स तु लाघवान्न लक्ष्यत इत्यलक्ष्यक्रमा एव सन्तो व्यंग्या रसादय इत्युक्तम्' इति।

पुनश्च 'तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यंग्यप्रतीत्योर्निमित्तनिमित्तिभावाद् नियमभावी क्रमः। स तूक्तयुक्तेः क्वचिल्लक्ष्यते क्वचिन्न लक्ष्यत' इति।

तदेवं वाच्यप्रतीयमानयोर्वक्ष्यमाणक्रमेण लिङ्गलिङ्गिभावस्य समर्थनात् सर्वस्यैव ध्वनेरनुमानान्तर्भावः समन्वितो भवति तस्य च तदपेक्षया महाविषयत्वात्। महाविषयत्वं चास्य ध्वनिव्यतिरिक्तेऽपि विषये पर्यायोक्तादौ गुणीभूतव्यंग्यादौ च सर्वत्र सम्भवात्। तच्च वचनव्यापारपूर्वकत्वात् परार्थमित्यवगन्तव्यम्। त्रिरूपलिङ्गाख्यानं परार्थमनुमानमिति केवलमुक्तनयानभिज्ञतया तत्र लक्षयत्यविचक्षणो लोकः" (तत्रैव, १/ पृ. ६७) इति।

इत्येवं प्रकारेण वाच्यप्रतीयमानार्थयोरवश्यंभाविक्रमं प्रदर्श्य वाच्यस्य प्रतीयमानं प्रति साधनत्वात् लिङ्गत्वाद्वा साध्यस्य लिङ्गिनः प्रतीतावनुमानमेव कारणं न तु व्यञ्जनेति महिमभट्टस्याशयः। परन्तु साहित्यदर्पणकारो विश्वनाथकविराजो व्यक्तिविवेककारमहिमभट्टस्योक्तौ वज्रप्रहारं कुर्वन् वदति-

"तत्र प्रष्टव्यं- किं शब्दाभिनयसमर्पितविभावादि-प्रत्ययानुमितरामादिगतरागादिज्ञानमेव रसत्वेनाभिमतं भवतः, तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा ? आद्ये न विवादः, किन्तु रामादिगतरागादिज्ञानं रससंज्ञया नोच्यतेऽस्माभिः इत्येव विशेषः। द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतयाऽसिद्ध एव। यच्चोक्तं तेनैव- यत्र यत्रैवंविधानां

विभावानुभावसात्त्विकसञ्चारिणामभिधानमभिनयो वा तत्र तत्र शृङ्गारादिरसाविर्भाव इति सुग्रहैव व्याप्तिः पक्षधर्मता च। तथा-

यार्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम्।
सैवानुमितिपक्षे नो गमकत्वेन संमता।। इति।

इदमपि नो न विरुद्धम्। न ह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्माकमभिमता किन्तु स्वप्रकाशमात्रविश्रान्तः सान्द्रानन्दनिर्भरः। तेनात्र सिसाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता" (साहित्यदर्पणः, ५/ पृ. ३५१-३५३, चौखम्बाविद्याभवन, वाराणसी,१९८२) इति।

अयमर्थो विश्वनाथोक्तेर्यत्- यदि रामादिगतरत्यादिज्ञानमेव रसपदेनोक्त्वा तस्यानुमेयत्वं साध्यते भवता (महिमभट्टेन) तर्हि नास्माकं विवादः। यतो हि रामादिरतेरनुमेयत्वं सम्भवति, न तु तस्यास्वाद्यत्वं कथमपि। वस्तुतस्तु रामादिगतरत्यादिभावानां भावनया सहृदयैर्भाव्यमान आत्मनिष्ठः स्वप्रकाशानन्दचिन्मयः सान्द्रानन्दनिर्भरो रस इत्युच्यते। यतो हि यस्य यस्य विभावानुभावसात्त्विकानां साक्षात्कारो भवति तस्य तस्य नियमेनैव रसाविर्भावो नैव भवतीति, व्याप्तेरभावाद्, असहृदयानां (वासनारहितानां) तथाभावाद्, हेतोराभासत्वान्नानुमानं सूपपन्नम्।

न केवलं रसादेर्व्यंग्यस्यानुमानं निरसितं विश्वनाथेनापि तु वस्त्वलङ्कारव्यंग्ययोरपि। तथा हि- "भ्रम धार्मिक- इत्यादौ गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति इति यदुक्तव्यं तत्रानैकान्तिको हेतुः। भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण वा गमनस्य संभवात्, पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धासिद्धेश्च।

जलकेलि- इत्यत्र 'य आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसंघटनकारी स चन्द्र एव' इत्यनुमितिरेवायमिति न वाच्यम्, उत्त्रासकादावनैकान्तिकत्वात्। 'एवंविधोऽर्थः एवंविधार्थबोधक एवंविधार्थत्वात्, यन्नैवं तन्नैवम्' इत्यनुमानेऽप्याऽऽभासमानयोगक्षेमो हेतुः।

एवंविधार्थत्वाद् इति हेतुना एवंविधानिष्टसाधनस्याप्युपपत्तेः" (तत्रैव, ५/ पृ. ३५४-३५५) इति।

अर्थाद् भ्रम धार्मिक- इत्यादौ गोदावरीतीरे सिंहोपलब्धेः भीरुब्राह्मणस्य भ्रमणं यदनुमितं तन्न युक्तं भीरोरपि गुरोः प्रभोर्वाऽऽदेशेन प्रियानुरागेण वा तत्र गमनस्य संभवादनैकान्तिको हेतुः, पुंश्चल्या वचनं च न प्रामाणिकमिति सन्दिग्धासिद्धिहेतुश्चापि भवतीति हेतोराभासतयाऽनुमानं दुर्घटम्। तथैव जलकेलि- इत्यत्र राधिकावदनदर्शनादर्शनाभ्यां चक्रवाकविघटनसंघटनं भवतीति, राधिकावदनं चन्द्र एवेति रूपकालङ्कारोऽपि अनुमेय इति यदुक्तं तदपि हेत्वाभासयुक्तम्। तत्र चक्रवाकविघटनसंघटनयोर्भयकारणान्तरतोऽपि सद्भावाद् अनैकान्तिको हेतुः।

काव्यप्रकाशकार आचार्यमम्मटोऽपि महिमभट्टप्रतिपादित-व्यंग्यस्यानुमितिं दूषयति। तथा हि- अत्रोऽच्यते- "भीरोरपि गुरोः प्रभोर्वा निदेशेन, प्रियानुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः। शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि। गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः अपि तु वचनात्। न च वचनस्य प्रामाण्यमस्ति अर्थेनाप्रतिबन्धादित्यसिद्धश्च। तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः ?

तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम्। न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम्। एवंविधादप्येवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशिते इति व्यक्तिवादिनः पुनस्तद् अदूषणम्" (काव्यप्रकाशः, ज्ञानमण्डललिमिटेड्, वाराणसी, १९६०., ५/ पृ. २६१-२६२) इति।

एवं प्रकारेण हेत्वाभासयुक्तत्वात् निःशेषच्युतचन्दनमित्यादौ चन्दनच्यवनादीनि यथा संभोगद्वारा तथा स्नानादिद्वाराऽपि भवन्तीत्यनैकान्तिकत्वान्नानुमानम्। व्यञ्जना तु युक्तिमनपेक्ष्यैव अपूर्वशक्तिमहिम्ना सम्भोगरूपव्यंग्यार्थबोधने क्षमेति काव्यप्रकाशकारमम्मटस्याशयः।

यद्यनुमितिवादिनः पृच्छेयुः यथाऽनुमानेऽनैकान्तिको दोषस्तथा व्यंजनायामपि तर्हि कथं व्यंग्यबोध इति चेदुच्यते काव्यप्रकाशटीकाकारेणाऽऽचार्यभीमसेनदीक्षितेन- "धिङ् मूर्ख, व्यञ्जनायां न व्याप्तिर्न वा पक्षधर्मताया निर्धारणमङ्गम्, किन्तु संभावितादप्येवंविधादेवंविधोऽर्थः प्रतीयत इति मूकीभवेति। एवञ्चावाग्गोचरब्रह्मबोधिकेयमलौकिकी वृत्तिर्वाग्देवताङ्गीकृता व्यञ्जना ब्रह्मणाऽप्यपलपितुमशक्येति सुधीभिर्मन्तव्यम्" (काव्यप्रकाशीयसुधासागरटीकासमीक्षा, डा.सुज्ञानकुमारमाहान्तिः, लोकोभाषाप्रचारसमितिः, पुरी, २००१, पृ. ७१) इति।

ईदृशव्यञ्जनाव्यापारगम्यस्य व्यंग्यार्थस्य बोधने तात्पर्याख्यवृत्तिरेवालमिति ये केचन वदन्ति तेषां निरासायाभिनवगुप्तपादेन ध्वन्यालोकलोचने प्रतिपादितम्-

"पदार्थेषु सामान्यात्मसु अभिधाव्यापारः समयापेक्षयाऽर्थावगमनशक्तिर्ह्यभिधा। समयश्च तावत्येव न विशेषांशे, आनन्त्याद् व्यभिचाराच्चैकस्य। ततो वेशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते 'सामान्यानन्यथासिद्धेर्विशेषं गमयन्ति हि' इति न्यायात् इति। ............सिंहो माणवक इत्यत्र द्वितीयकक्षानिविष्टतात्पर्यशक्तिसमर्पितान्वयबाधकोल्लासानन्तरमभिधातात्पर्यशक्तिद्वयव्यतिरिक्ता तावत्तृतीयैव शक्तिस्तद्बाधकविधुरीकरणनिपुणा लक्षणाभिधाना समुल्लसति।"

(ध्वन्यालोकलोचन, १/ पृ. ५६-५९, ध्वन्यालोकः, जयकृष्णदास-हरिदासगुप्तः, चौखम्बा संस्कृत सीरिज ऑफिस, बनारस सिटी, १९४०) ।

एवं प्रकारेणाचार्याभिनवगुप्तेन प्रतिपादितं येनायमर्थः निर्गलति यदभिधाशक्तिः पदार्थसामान्यं बोधयति। तात्पर्या च शक्तिः पदार्थानां संसर्गरूपं विशेषार्थं बोधयित्वा विरता भवति। तात्पर्यशक्तिबोधितस्यार्थस्य बाधानन्तरं लक्षणाया अवकाश इति कुतो तदुत्तरव्यंग्यार्थबोधने तात्पर्याख्या शक्तिः क्षमेत ?

केचनाभिधाव्यापार एवेषुरिव दीर्घदीर्घतरव्यापारः सन् तात्पर्यलक्ष्यव्यंग्यादीनां समेषामर्थानां बोधने क्षमेति वदन्ति। केचन च दशरूपककारादयो वदन्ति यत् तात्पर्यशक्त्यैव पार्यन्तिकव्यंग्यार्थबोधो भवति। उक्तञ्च धनिकेन-

तात्पर्यानतिरेकाच्च व्यंजकत्वस्य न ध्वनिः।
किमुक्तं स्यादश्रुतार्थतात्पर्येऽन्योक्तिरूपिणि।।
विषं भक्षय पूर्वो यश्चैवं परसुतादिषु।
प्रसह्यते प्रधानत्वाद् ध्वानित्वं केन वार्यते।।
ध्वनिश्चेत् स्वार्थविश्रान्तं वाक्यमर्थान्तराश्रयम्।
तत्परत्वं त्वविश्रान्तौ तन्न विश्रान्त्यसंभवात्।।
एतावत्येव विश्रान्तिस्तात्पर्यस्येति किं कृतम्।
यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम्।। (दशरूपकस्य ४/३५ कारिकाया अवलोकवृत्तिः, पृ.३३८-३३९, दशरूपकम् धनिकस्य वृत्तिसहितम्, राजकमल प्रकाशन, दिल्ली-पटना, १९६३) इति।

परन्तु 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति न्यायात् यः शब्दः यदर्थे शक्यऽसौ तदेव बोधयित्वा विरतो भवति। यदा शब्दः स्वार्थे क्षीणशक्तिः भवति तदा तत्र व्यापारान्तरस्याभावो भवत्येव। अपरञ्च यद्यभिधाऽथवा तात्पर्या शक्तिः व्यंग्यबोधने क्षमे तर्हि 'ब्राह्मण ! पुत्रस्ते जातः, कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि कथं न वाच्यत्वं, न वा तात्पर्यशक्तिबोध्यत्वम् ?

यत्परः शब्दः स शब्दार्थः इति न्यायानुगामिना दशरूपककारेण धनिकेन रसस्यापि तात्पर्यवृत्तिबोध्यत्वं प्रतिपादयतोक्तम्- "यथा लौकिकवाक्येषु श्रूयमाणक्रियेषु 'गामभ्याज' इत्यादिष्वश्रूयमाणक्रियेषु द्वारं द्वारम् इत्यादिषु स्वशब्दोपादानात् प्रकरणादिवशाद् बुद्धिसन्निवेशिनी क्रियैव कारकोपचिता, वाक्यार्थस्तथा काव्येष्वपि स्वशब्दोपादानात् क्वचित् प्रीत्यै नवोढा प्रियेत्येवमादौ क्वचिच्च प्रकरणादिवशान्नियताभिहित-विभावाद्यविनाभावाद्वा साक्षाद् भावकचेतसि विपरिवर्तमानो रत्यादिः स्थायी स्वस्वविभावानुभावव्यभिचारिभिस्तत्तच्छब्दोपनीतैः संस्कार-परंपरया परं प्रौढिमानीयमानो रत्यादिर्वाक्यार्थः। न चापदार्थस्य वाक्यार्थत्वं नास्तीति वाच्यम्। कार्यपर्यवसायित्वात्तात्पर्यशक्तेः" (दशरूपकस्य ४/३५ कारिकाया अवलोकवृत्तिः, पृ.३३७-३३८, दशरूपकम् धनिकस्य वृत्तिसहितम्, राजकमल प्रकाशन, दिल्ली-पटना, १९६३) इति।

एवं प्रकारेण रसादेरपि व्यंग्यस्य तात्पर्यशक्तिबोध्यत्वमिति धनिकस्य मतं प्रत्याचक्षाणेन विश्वनाथकविराजेनोक्तम्-

"तत्र प्रष्टव्यं किमिदं तत्परत्वं नाम? तदर्थत्वं वा, तात्पर्यशक्त्या तद्बोधकत्वं वा? आद्ये न विवादः, व्यंग्यत्वेऽपि तदर्थतानपायात्। द्वितीये तु केयं तात्पर्याख्या वृत्तिः? अभिहितान्वयवादिभिरङ्गीकृता, तदन्या वा? आद्ये दत्तमेवोत्तरम्। द्वितीये तु नाममात्रे विवादः, तन्मतेऽपि तुरीयवृत्तिसिद्धेः" (साहित्यदर्पणः, ५/ पृ. ३५२, चौखम्बाविद्याभवन, वाराणसी, १९८२) इति।

अयमाशय आचार्यविश्वनाथस्य यत् 'यत्परः शब्दः सः शब्दार्थः' इत्यत्र तत्परत्वस्यार्थः यदि शब्दस्य व्यंग्यपरत्वमिति तदा तत्र विवाद एव नास्ति, यतो हि तस्मादेव शब्दाद् यथा वाच्यतात्पर्यादयोऽर्थाः प्रतीयन्ते तथा व्यंग्यार्थोऽपि। यदि तात्पर्यशक्त्या व्यंग्यबोधकमित्युच्येत, तदा 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेन तत् खण्डितम्। यदि तात्पर्यशक्तिव्यतिरिक्तेन व्यापारेण व्यंग्यार्थबोधो भवतीत्युच्यते तदा तेषामपि मतेन तुरीयवृत्तिः सिद्ध्यति,

विवादस्तु नाममात्र एव। अत एव लाघवात् साहित्यसंप्रदायसिद्धेश्च व्यंग्यबोधने व्यञ्जनाशक्तिः स्वीकार्या।

केचन लक्षणाशक्त्या कथं न व्यंग्यार्थबोध इति प्रश्नं कुर्वन्ति। तान् प्रति आचार्यमम्मटेनोक्तं- 'हेत्वभावान्न लक्षणा' (काव्यप्रकाशः, २/ १६) इति। अर्थात् मुख्यार्थबाधतत्सम्बन्ध-रूढिप्रयोजनयोरन्यतरसद्भाव इति हेतुत्रयस्य सद्भावे एव लक्षणायाः प्रसक्तिः। 'गङ्गायां घोषः' इत्यादौ च शीतत्वपावनत्वरूपव्यंग्यबोधने न चैतद् हेतुत्रयं दृश्यते। उक्तञ्च तेनैव-

लक्ष्यं न मुख्यं नाऽप्यत्र बाधो योगः फलेन नो।
न प्रयोजनमतस्मिन् न च शब्दः स्खलद्गतिः।। (तत्रैव, २/१६)

इति।

तद्वृत्तावपि मम्मटेन परिष्कृतम्- "यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति, तद्वद् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत्। न च तटं मुख्योऽर्थः। नाऽप्यत्र बाधः, न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः सम्बन्धः। नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्। नापि गंगाशब्दस्तटमिव, प्रयोजनं प्रतिपादयितुमसमर्थः" (तत्रैव, वृत्तौ, २/१६) इति।

एवं प्रकारेण लक्षणामूलव्यंग्यार्थबोधनेपि व्यञ्जनैव व्यापारः शक्तः, लक्षणायास्तु तत्र शक्त्यभावो, मुख्यार्थबाधादिहेत्वभावादिति मम्मटमतसारः। ध्वनिकारेणाप्युक्तम्-

मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम्।
यदुद्दिश्य फलं, तत्र शब्दो नैव स्खलद्गतिः।।
वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।
व्यंजकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्।।

(ध्वन्यालोकः,१/२०,२१) इति।

काव्ये वाच्यातिरिक्तव्यंग्यस्य रमणीयतां प्रतिपादयताऽऽनन्दवर्धनाचार्येणोक्तम्-

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।

(तत्रैव,१/४) इति।

अर्थाद् यथा कस्याश्चित् कामिन्याः प्रसिद्धकरचरणाद्यवयवादिभिन्न लावण्यमतिशयेन भाति, तथा महाकवीनां वाणीष्वपि वाच्यार्थभिन्नो व्यंग्यार्थो भाति।

वाक्यवाक्यार्थयोर्मध्ये वाच्यवाचकसंन्धमात्रं प्रतिपादयन्तो व्यैयाकरणा वेदान्तिनोऽपि वदन्ति यत्- 'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव च वाचकम्' (काव्यप्रकाशः, ज्ञानमण्डललिमिटेड्, वाराणसी, १९६०., ५/ पृ. २५७) इति। वैयाकरणा अखण्डार्थमेव स्वीकुर्वन्ति। तेषां मते पदार्थबोधने पदसमुदाय एव शक्तः, न तु तद्घटका वर्णा अपि, तथैव वाक्यार्थबोधनेऽपि सम्पूर्णं वाक्यमेव शक्तं, न तु तद्घटकानि पदान्यपि। उक्तञ्च वैयाकरणभूषणे-

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।
(वैयाकरणभूषणम्, अखण्डस्फोटनिर्णयः/ कारिका ६८) इति।

भर्तृहरिणाऽपि वाक्यपदीय उक्तम्-

"ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः।।
उपायाः शिक्ष्यमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।" (वाक्यपदीयम्, २.१४ तथा २.२४०) इति। अर्थाद् यथा ब्राह्मणकम्बलमिति शब्दे ब्राह्मणपदस्यार्थो नास्ति तथा वाक्येऽपि पदानां न कश्चिद् भिन्नोऽर्थ इति सारम्।

वेदान्तिनां नयेऽपि 'तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादिवाक्येषु अखण्डार्थबुद्धिरेव जायते। परं तेऽपि वैयाकरणमीमांसका अवश्यं पदपदार्थकल्पनां कुर्युरिति तेषामपि मते पदार्थस्य वाच्यत्वं, तत्पार्यन्तिकार्थस्य च स्थलदृष्ट्या शक्तिसापेक्ष्यं तात्पर्यत्वं, लक्ष्यत्वं, व्यंग्यत्वं वति। उक्तञ्चाचार्यमम्मटेन- 'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव

च वाचकम् इति येऽप्याहुः, तैरविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यंग्य एव' (काव्यप्रकाशः, ज्ञानमण्डललिमिटेड्, वाराणसी, १९६०., ५/ पृ.२५७) इति।

एवं प्रकारेण प्राच्यनये न मीमांसका, नापि नैयायिका, न वैयाकरणा न च वेदान्तिनो व्यञ्जनाशक्तिं स्वीकुर्वन्ति। साहित्यिकष्वपि सर्वेषु सम्प्रदायेषु क्वचिद्रससंप्रदाये, पूर्णतो ध्वनिसंप्रदाय एव व्यंजनाशक्तेः स्वीकारो दृश्यते। यतो हि ध्वनेः रसस्य च मूलाधारो व्यञ्जनैव। सहृदयाश्च यथा व्यंग्य एव बद्धादरा न तथा वाच्ये, तात्पर्ये, लक्ष्ये वा। यथोदकार्थं द्रोणिः साधनत्वेन प्रयुज्यते तथा व्यंग्यार्थबोधनार्थमन्येषां वाच्यादीनामर्थानां बोध्यम्। यथाऽऽलोकार्थी दीपशिखायां यत्नवान् तथा व्यंग्यार्थास्वादार्थी वाच्याद्यर्थेऽपि। उक्तं चानन्दवर्धनाचार्येण-

आलोकार्थी यथा दीपशिखायां यत्नवान् जनः।
तदुपायतया, तद्वदर्थे वाच्ये तदादृतः।। (ध्वन्यालोकः,१/९) इति।

स एव रसात्मको व्यंग्यः कवीनामाराध्यमानं वस्तु विद्यते येन तेषां वाणीषु अलौकिकप्रतिभा प्रस्फुरति। उक्तञ्च तेनैव-

सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।। (तत्रैव,१/६) इति।

परमाचार्यमुकुलभट्टो व्यञ्जनाव्यारं नैव स्वीकरोति। ततः पूर्वमपि मीमांसा-न्याय-व्याकरणशास्त्रीयाचार्यैः व्यञ्जनाव्यापारस्योल्लेखोऽपि नैव कृतो दृश्यते। पूर्वोक्तप्रकारेणाचार्यानन्दवर्धनेन व्यञ्जनाव्यापरस्य चर्चा व्यवस्थितरूपेण सर्वप्रथमं कृता दृश्यते। तदन्वभिनवगुप्ताचार्येणाभिनवभारत्यां लोचने च तथाऽऽचार्यमम्मटेन काव्यप्रकाशे बलवत्तरतर्कैर्व्यञ्जनाव्यापारः प्रतिष्ठापितः।

एवमभिधाव्यापारस्तमेवार्थं बोधयितुं क्षमा यत्र वाच्यवाचकयोर्मध्ये संकेतो विद्यते। लक्षणा च मुख्यार्थबाधावस्थायामेव रूढिप्रयोजनयोरन्यतरस्य

सद्भावे मुख्यार्थसंबद्धार्थमेव बोधयति। परं व्यञ्जनाव्यापारो न संकेतं, न मुख्यार्थबाधं, नापि कारणान्तरमपेक्षते। व्यंग्यार्थो मुख्यार्थेन संबद्धोऽपि स्यादसंबद्धोऽपि स्यात्। व्यञ्जना न रूढिं नापि प्रयोजनविशेषमपेक्षते। तथापि व्यंग्यर्थः क्वचित् क्वचित् वक्तृवैशिष्ट्यं, क्वचिच्च बोद्धव्यप्रकरणादिवैशिष्ट ्यानां सहायता स्वीकर्तुं शक्यते। परमेतेषां सहायकतत्त्वानां नियतरूपेण न भवति। व्यंग्यार्थप्रतीतावेतासां परिस्थितीनां संख्याऽनियताऽपरिमिता च। परं वाच्यार्थलक्ष्यार्थौ सदैव नियतावेव भवतः। महिमभट्टप्रतिपादितमनुमानमपि नियतार्थमेव बोधयतीति तदपि न व्यंग्यार्थं स्प्रष्टुमप्यलमित्यलमप्रस्तुतवस्तुविस्तरेण।

**तात्पर्याख्या वृत्तिः**

मीमांसवैः तात्पर्याख्या काचिदन्यापि वृत्तिः स्वीक्रियते यया पदार्थप्रतीतेरनन्तरं तेषां पदार्थानामन्वितरूपस्तात्पर्यार्थः प्रतीयते। तात्पर्यवृत्तिविषये कुमारिलभट्टेन (शाबरभाष्ये १.१.७) प्रतिपादितमस्ति। यतो ह्याचार्यमुकुलभट्टोऽपि मीमांसकानां सरणिमनुसरति, अत एव तेनापि तात्पर्यवृत्तिविषये गम्भीरा महत्त्वपूर्णास्तथा च केचन नवीनाः सिद्धान्ताः प्रतिपादिताः सन्ति; त इह विचार्यन्ते। कुमारिलभट्टस्या**भिहितान्वयवादा**नुसारं प्रथममभिधाव्यापारद्वारा वाच्यार्थप्रतीतिर्भवति, तदनु तेषामभिहितानां पदार्थानामन्वयो वाक्यार्थरूपस्तात्पर्यार्थस्तात्पर्याख्यशक्त्या भवति। अपरपक्षे **अन्विताभिधानवाद**स्य प्रतिष्ठाता प्रभाकरो वाक्यार्थबोधने तात्पर्याख्यशक्तिं नैव स्वीकरोति। तन्मतेन वाक्यार्थे पदानामन्वय; पूर्वमेव तिष्ठति। तदर्थं व्यापारान्तरस्यापेक्षा नास्ति। एवमन्वितानामेव पदार्थानामभिधानमभिदाव्यापारेण भवतीत्यन्विताभिधानवादिन आहुः। आचार्यमुकुलभट्टेन तु अभिहितान्वयवादान्विताभिधानवादयोः समुच्चयरूपः कश्चिन्नूतन एव पक्ष आविष्कृतो वर्तते। अस्मिन् समुच्चयवादे पदार्थश्च वाक्यार्थश्चाविभावपि स्वीकृतौ। तत्र सामान्यभूतपदाथेभ्यो

अन्वयविशिष्टपदार्थानामपेक्षा भवति चेदभिहितान्वयः, तथा पदार्थापेक्षां विना साक्षाद् वाक्यार्थापेक्षा भवति चेदन्विताभिधानम्। एवं पक्षेऽस्मिन्नभिहितान्वयान्विताभिधानयोर्द्वयोरपि स्वीकारो भवति। तदुक्तं मुकुलभट्टेन "अन्येषां तु मते पदानां तत्तत्सामान्यभूतो वाच्यार्थः, वाक्यस्य तु परस्परान्विताः पदार्था इति पदापेक्षयाभिहितान्वयः, वाक्यापेक्षया तु अन्विताभिधानम्। एवं चैतयोरभिहितान्वयान्विताभिधानयोः समुच्चयः इति (अभिधावृत्तमातृका, प्रस्तुतसंस्करणं, पृ. ५९)।"

एतदतिरिक्तमखण्डवाक्यार्थवादिनामेकश्चातुर्थोऽपि पन्थाऽऽविष्कृतोऽस्ति मुकुलभट्टेन यत्र नाभिहिनान्वयः, नान्विताभिधानं, नापि तत्समुच्चयो वर्तते। मतेऽस्मिन् तत्त्वतः वाक्यं वाक्यार्थश्चाखण्डरूपेण वर्तते। तत्र पदपदार्थयोः सत्तैव नास्ति। एतेन नाभिधायाः पूर्वं नापि परमन्वयस्यावकाशो भवति। तदुक्तं मुकुलभट्टेन "अखण्डवाक्यार्थवादिनस्त्वाहुः - विशिष्टस्य वस्तुनो वाक्यार्थत्वेऽभ्युपगम्यमाने विशेषस्यानन्वितत्वेन तद्विपरीतसामान्यविरुद्धत्वान्न परमार्थस्वभावसामान्यभूतार्थावच्छादितरूपतया विशेषाणां स्ववाचकैः संबन्धग्रहणमुपपद्यते। अतः परमार्थतो वाक्यवाक्यार्थयो-रखण्डत्वान्नाभिहितान्वयो नाप्यन्विताभिधानम्, न च तत्समुच्चयो युज्यते, पदार्थानामविद्यमानत्वा"दिति। (अभिधावृत्तमातृका, प्रस्तुतसंस्करणं, पृ. ६०)

एतेषु चतुर्षु पक्षेषु लक्षणायाः कक्षाविभागं दर्शयितुमाह मुकुलभट्टो यदभिहितान्वयपक्षेऽभिधाव्यापारेण पदार्थप्रतीतेरनन्तरमाकांक्षा-योग्यतासन्निधिवशात् पदार्थवाक्यार्थयोर्विशेषणविशेष्यभावरूपान्वये सति मुख्यार्थबाधादिकारणसहितत्वे सति लक्षणाऽपेक्षते। अन्विताभिधानवादे त्वन्वितपदार्थानामेव वाच्यत्वात् विशिष्टपदार्थे तावन्नान्वयो घटते यावन्न लक्षणाया आश्रयो भवति। अतोऽन्विताभिधानपक्षे वाक्यार्थरूपविशिष्टार्थस्य वाच्यत्वात् पूर्वमेव निमित्तावस्थायां लक्षणा स्वीकर्तव्या भवति। समुच्चयवादस्य

स्वीकारे पदापेक्षया पदार्थरूपवाच्यार्थप्रतीतेः परं लक्षणा भविष्यति, वाक्यापेक्षया च वाक्यार्थरूपवाच्यार्थप्रतीतेः पूर्वं लक्षणा भविष्यति। एवमत्र समुच्चयवादे अपेक्षानुसारं लक्षणा पूर्वमपि परमपि च भविष्यति। अखण्डवाक्यार्थवादे तु परमार्थतो लक्षणा नैव भविष्यति। यतो ह्यत्र पृथक्तया पदार्थानामभिधेयतैव न भवति, लक्षणा च पदार्थानामभिधेयतामाश्रित्य वर्तते। तदुक्तमाचार्यमुकुलेन "तत्र च यदा तावदभिहितान्वयः तदा स्ववाचकैरभिहितानां पदार्थानामभिहितोत्तरकालम् आकांक्षायोग्यतासन्निधिमाहात्म्याद् विशेषणविशेष्यभावात्मके परस्परान्वये सति सा लक्षणा पदार्थानां सामान्यभूतानां यद् वाच्यत्वं तस्मादूर्ध्वं वाक्यार्थे पदार्थसामार्थ्यादवगम्यमाने सतीष्यते। अन्विताभिधानपक्षे त्वन्वितानां विशिष्टानामेव पदार्थानां 9वाच्यत्वम्" अभिधेयत्वम्, न तु पदार्थानां सामान्यभूतत्वेनाभिहितानां वैशिष्ट्यम्। तत्र विशिष्यमाणानां वस्तूनां पदार्थत्वं तावन्न घटते, यावत् सकलवाक्यार्थानुयायितया प्रतिपन्नस्याव्यभिचरितस्ववाचकसंबन्धस्य सामान्यरूपस्य निमित्तभूतस्यार्थस्य संप्रत्यये सति तत्तद्वाक्यार्थविषयतया यथाविषयं षट्प्रकारा लक्षणा नाविर्भवति। अतोऽन्विताभिधाने विशिष्टानां पदार्थानां वाक्यार्थस्वभावानां यद् वाच्यत्वं तस्य 'पुरः' तस्मात् पूर्वं निमित्तावस्थायां लक्षणावस्थिता। अभिहितान्वयान्विताभिधानसमुच्चये तु पूर्वोदितन्यायद्वितय-संकलनया पदापेक्षया वाच्यत्वोत्तरकालभाविनी लक्षणा भवति, (वाक्यापेक्षया च) वाक्यार्थोत्तरकालं तस्याः (वाच्यत्वात्) पूर्वमवस्थानम्। तदिदमुक्तं 'द्वये द्वय'मिति। 'द्वये' अभिहितान्वयान्विताभिधानसमुच्चयात्मके 'द्वयं' वाच्यत्वादूर्ध्वं, प्राग्भावश्च लक्षणाया इत्यर्थः। अखण्डे तु वाक्यार्थेऽसौ लक्षणा परमार्थेन नास्ति। भिन्नानां पदार्थानां परमार्थतोऽभिधेयभावस्यानुपपद्यमानत्वात्, तदाश्रितत्वाच्च लक्षणायाः" (अभिधावृत्तमातृका, प्रस्तुतसंस्करणं, पृ. ६१-६२) इति।

**अभिधावृत्तिमातृका इति नामकरणस्य याथार्थ्य -**

केचन **अभिधावृत्तिमातृका** इति अन्ये च **अभिधावृत्तमातृका** इति नाम्ना अभिदधति ग्रन्थममुम्। तत्र अभिधा, वृत्तिः वृत्तं वा तथा मातृका इति त्रयाणां पदानां समन्वयो दृश्यते ग्रन्थेऽस्मिन्। अभिधा चासौ वृत्तिरित्यभिधावृत्तिः तस्याः मातृका नाम मतृकल्पा। वृत्तिर्नाम व्यापारः। पक्षे अभिधायाः वृत्तं नाम प्रकरणं समूहो वा तेषां मातृका नाम मातृकल्पा। ग्रन्थेऽस्मिंश्च वृत्तमिति वृत्तिरिति चोभयमप्यभिधानं प्रयुक्तं दृश्यते। तत्र इदानीं "सकलशब्दाविभागात्मकस्य शब्दतात्त्वस्य यदा शब्दार्थसंबन्धत्रितयरूपतया रज्जुसर्पतया विवर्तमानत्वं तदैतदभिधा**वृत्तं** दशविधव्यवहारोपारोहितयोपपद्यते, इत्यत्र निरूपितैवंविध-दशविधाभिधा**वृत्त**सम्बन्धित्वम्। अप्रत्यस्तामितसकल-विकल्पोल्लेखोपप्लवत्वे तु क्रमभेदसंहारेण तस्मिन् वाक्तत्त्वे विवर्तमाने तेषां दशानामभिधा**वृत्ता**नां कुतो गतिः" - नैव प्रसर इत्यर्थः। (*अभिधावृत्तिमातृका, पृ. ८२*) इत्यादिषु स्थलेषु इत्येतदभिधा**वृत्तं** दशधात्र विवेचितम्।। १३ ।। मुख्यस्याभिधावृत्तस्य प्रकाराश्चत्वारः, लाक्षणिकस्य तु षडित्येवं दशप्रकारमभिधा**वृत्त**मत्र विवेचितम्। अधुना फलमेतस्य दर्शयति - (*अभिधावृत्तिमातृका, पृ.८४*) दशविधेनानेनाभिधा**वृत्तेन** समग्रस्य वाक्परिस्पन्दस्य व्याप्तत्वादनेन (*अभिधावृत्तिमातृका, पृ.८४*) इत्यादिषु स्थलेषु च वृत्तपदं प्रयुक्तं दृश्यते। परमेतेषु स्थलेषु वृत्तपदस्यार्थः प्रकरणं समूहो भेदा वा। ग्रन्थकारश्चाभिधामेकमेव शब्दव्यापारं स्वीकरोति, वाच्यार्थवैविध्येन च तस्य दश भेदान् प्रपञ्चयति। परं ग्रन्थकारोऽन्तिमायां मातृकायां वृत्तिपदमेव प्रयुञ्जन् लिखति -

भट्टकल्लटपुत्रेण मुकुलेन निरूपिता।
सूरिप्रबोधनायेयमभिधा**वृत्ति**मातृका।।

(*अभिधावृत्तिमातृका, १५*)

ग्रन्थस्य परिसमाप्तिरेव ग्रन्थनामकरणस्य सार्थकतां प्रतिपादयति। ग्रन्थेऽस्मिन् प्रतिपादितासु पञ्चदशसु मातृकास्वन्तिमायां मातृकायां वृत्तिपदं प्रयुक्तमिति, वृत्तिपदञ्च शब्दशक्तिपरकमिति चास्माभिः **अभिधावृत्तिमातृका** इति नाम्नाऽभिहितोऽयं ग्रन्थः।

## अभिधावृत्तिमातृकाग्रन्थस्य संपादनम्

अभिधावृत्तिमातृकायाः प्रथमं संपादनं निर्णयसागरप्रेस्-मुम्बईपक्षतः गङ्गेशशास्त्रितैलङ्गद्वारा कृतमासीत्। ततः पं.रेवाप्रसादद्विवेदिना संस्कृत्य १९७३तमे ईशवीयवर्षे चौखम्बाविद्याभवनवाराणसीद्वारा प्रकाशितम्। ततः डॉ.ब्रह्ममित्रावस्थिद्वारा इन्दुप्रकाशन-दिल्लीपक्षतः १९७७तमे ईशवीयवर्षे प्रकाशितम्। मया चैतत्त्रितयमपि प्रकाशनं सावधानमनुशील्य यथावसरं संस्कृत्य सटिप्पणं ग्रन्थोऽयं सुबोधिनीति अपूर्वया संस्कृतवृत्त्या सहितः प्रकाशमानीयते।

## अभिधावृत्तिमातृकाग्रन्थस्य टीकाः

साहित्यशास्त्रेऽभिधावृत्तिमातृका शब्दशक्तिविषक आद्यो ग्रन्थः। मुकुलभट्टकृतः पञ्चदशकारिकात्मकः स्वोपज्ञवृत्तिसहितोऽयं ग्रन्थः यद्यप्याकारेण लघुस्तथापि दुरूहः। ग्रन्थस्यास्य सिद्धान्तान् आधारीकृत्य परवर्तिकाव्यशास्त्रेषु शब्दशक्तिविषयका विचाराः प्रवर्तिता इति कृत्वा ग्रन्थोऽयं साहित्यशास्त्रे वैशिष्ट्यं भजते। यद्यप्यभिधावृत्तिमातृकायाः पं.रेवाप्रसादद्विवेदिना कृता **भाषा** इति हिन्दीटीका या १९७३तमे ईशवीयवर्षे चौखम्बाविद्याभवनवाराणसीद्वारा प्रकाशिता तथा डॉ.ब्रह्ममित्रावस्थिद्वारा कृता हिन्दीव्याख्या इन्दुप्रकाशन-दिल्लीपक्षतः १९७७तमे ईशवीयवर्षे प्रकाशिता। एयावद् ग्रन्थस्यास्य संस्कृतटीका केनापि विदुषा नैव विहिताऽऽसीत्। मया च ग्रन्थोऽयं राष्ट्रियसंस्कृसंस्थानस्य (मानितविश्वविद्यालयस्य) आचार्यद्वितीयवर्षस्य काक्षायां गतेषु दशसु वर्षेषु पाठ्यते। पाठनकाले ग्रन्थस्य

संस्कृतटीकाया अभावाद् विद्यार्थिनां क्लेशं विलोक्य **सुबोधिनी**ति संस्कृतवृत्तेस्तथा सुगमनीति हिन्दीवृत्तेर्निर्माण आत्मानं नियोजयामास। पूर्वं समुपलब्धे हिन्दीटीके क्वचित् क्वचित् शब्दानुवादमात्रपरायणे क्वचिच्चास्पष्टार्थप्रकाशनपरे इति शब्दशक्तिविषयकस्यामुस्य ग्रन्थस्य दुरुहतादूरीकरणे विद्यार्थिनां मानसपटले न तथा श्रद्धामादधत इति विचिन्त्य मया **सुबोधिनी**ति संस्कृतवृत्तिः यावच्छक्यं सरलया भाषया विहिताऽस्ति। सहैव **सङ्गमनी**ति हिन्दीवृत्तिरपि यावच्छक्यं सरलया गिरा निर्मिताऽस्ति। ग्रन्थस्यान्ते मया ग्रन्थप्रयुक्तानां पारिभाषिकशब्दानां व्याख्या विहिताऽस्ति येन तत्तच्छब्दानामर्था बोधगम्याः सुगमाश्च स्युः।

विनीतः

विक्रमाब्दः २०६५ डॉ. सुज्ञानकुमारमाहान्तिः

ॐ

श्रीमुकुलभट्टविरचिता

# अभिधावृत्तिमातृका

## सुबोधिनीसंस्कृतवृत्त्या सङ्गमनीहिन्दीवृत्त्या च विभूषिता

(मातृका)

{अभिधाशक्तेरुपादेयता}

इह खलु भोगापवर्गसाधनभूतानां तद्विपर्यय-परिवर्जनप्रयोजनानां च पदार्थानां निश्चयमन्तारेण व्यवहारोपारोहिता नोपपद्यते। तथा हि सर्वाणि प्रमाणानि प्रमेयावगतिनिबन्धनभूतानि निश्चयपर्यवसायितया प्राधान्यं भजन्ते। प्रमाणनिबन्धना च भोगापवर्गसाधनभूतानां तद्विपर्ययपरिवर्जनप्रयोजनानां च पदार्थानामवगतिः। अतो निश्चय एव तेषां पदार्थानां व्यवहारोपारोहनिबन्धनम्। निश्चयश्च शब्दसंभेदेनार्थं गोचरीकरोति। शब्दस्य च मुख्येन लाक्षणिकेन वाभिधाव्यापारेणार्थावगतिहेतुत्वमिति मुख्यलाक्षणिकयो-रभिधाव्यापारयोरत्र विवेकः क्रियते।

(सुबोधिनी)

या वाणी परमा परेत्यभिहिताऽव्यक्ता निगूढं स्थिता
पश्यन्तीति विवर्तरूपसहिता सूक्ष्माऽविभागा च या।
व्यक्ताव्यक्तमयी क्रमानुगमिता या मध्यमा संज्ञिता
सर्वस्य श्रुतिगोचरा विजयतां सा वैखरी मातृका।।

अद्वैतमक्षरं ब्रह्म शब्दतत्त्वं हि शाश्वतम्।
विवर्तते त्रिरूपेण शब्दार्थान्वयसंज्ञिना।।
बोधयत्यर्थजातं या शब्दाच्छ्रुतिगतात्सदा।
साभिधावृत्तिरित्युक्ता मुकुलेन महीयसा।।
तस्या दशविधाः प्रोक्ता लक्ष्यलक्षणसंयुताः।
यस्यां मातृस्वरूपिण्यां साऽभिधावृत्तिमातृका।।
बालानां सुखबोधाय विदुषां सुमनोहराम्।
वृत्तिं सङ्गमनीयुक्तां रचयामि सुबोधिनीम्।।

**इहे**ति। इह संसारेऽस्मिन्, खलु निश्चयेन, भोगापवर्गसाधनभूतानां भोगश्चापवर्गश्च भोगापवर्गौ तयोः साधनभूताः, तेषां भुक्तिमुक्तिकरणभूतानामित्यर्थः, तद्विपर्ययपरिवर्जनप्रयोजनानां तयोः भोगापवर्गयोः, विपर्ययोऽभावः, तस्य परिवर्जनं परिहारः, तस्य प्रयोजनानि कारणानि (ये पदार्थाः[1]), तेषां पदार्थानां प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां षोडशानां, द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाऽभावानां वा सप्तानां निश्चयमन्तरेण व्यवहारोपारोहिता प्रयोगयोग्यता नोपपद्यते न युज्यते। तत्र पदार्थेषु प्रमाणानां प्राधान्यं दर्शयितुमाह **तथाही**ति। साधनाश्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तं प्रमाणम्[2]। तच्च प्रत्यक्षमेकमेवेति चार्वाकाः। प्रत्यक्षमनुमानञ्च द्वे इति जैना बौद्धाश्च, वैशेषिका अपि तथा। प्रत्यक्षं

---

१. पदजन्यबोधविषयत्वनिष्ठाऽऽश्रयत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावान् पदार्थः।

२. प्रमाणप्रमेय......... न्यायसूत्रम् ?

शाब्दञ्चेति माध्वाः। प्रत्यक्षम्, अनुमानं, शाब्दञ्चेति रामानुजीयाः, पातञ्जला जरन्नैयायिकाश्च। प्रत्यक्षमनुमानमुपमानं शाब्दञ्चेति नव्यनैयायिका, वैयाकरणाः शैवाश्च। पूर्वोक्तैश्चतुर्भिः सहार्थापत्तिमपि पञ्चमप्रमाणत्वेन प्रभाकरादयो मीमांसकाः। अभावमपि कुमारिलभट्टप्रभृतयो मीमांसका अद्वैताश्च। पूर्वैः षड्भिः सह संभवम् ऐतिह्यञ्चेत्यष्टाविति पौराणिकाः। तान्त्रिकाश्च चेष्टामपि नवमं प्रमाणमामनन्ति। प्रमायां यद्धि भासते तत् प्रमेयम्[३]। प्रमेयस्यावगतिर्ज्ञानं, तस्य निबन्धनभूतानि कारणस्वरूपाणि यानि प्रमाणानि,तानि निश्चयपर्यवसायितया निर्णयान्तत्वेन, प्राधान्यं श्रेष्ठत्वं भजन्ते प्राप्नुवन्तीति। प्रमाणानि हि प्रमेयज्ञानकारणभूतानि पदार्थानां निश्चयात्मकं ज्ञानं साधयन्तीति सर्वेषु पदार्थेषु तेषां (प्रमाणानां) श्रेष्ठत्वं सिद्धयतीत्यर्थः। पदार्थज्ञानञ्च प्रमाणमूलमिति दर्शयितुमाह **प्रमाणनिबन्धना चे**ति। प्रमाणं निबन्धनं कारणं यस्याः सा प्रमाणनिबन्धना। भोगापवर्गसाधनभूतानां भुक्तिमुक्तिकारणस्वरूपाणां, तद्विपर्ययपरिवर्जनप्रयोजनानां तयोर्भोगापवर्गयोर्विपर्ययोऽभावस्तस्य परिवर्जनं परित्याग एव प्रयोजनं येषां ते तेषां भुक्तिमुक्त्यभावपरिहारकारणानां पदार्थानामवगतिर्ज्ञानम्। पदार्था हि भुक्तिं मुक्तिञ्च संपादयन्ति, तदभावञ्च नाशयन्ति। तेषाञ्च पदार्थानां ज्ञानं प्रमाणमूलमित्यवगन्तव्यम्। **अतो निश्चये**ति। अतस्तेषां पदार्थानां भोगापवर्गसाधनमूलत्वात् प्रमाणमूलत्वाच्च निश्चय एवेदमित्थमिति निर्णय एव, व्यवहारोपारोहे प्रयोगयोग्यतादशायां, निबन्धनं कारणम्। पदार्थानां प्रयोगयोग्यता तन्निश्चयात्मकज्ञानाधीनैव। नहि पदार्थनिश्चयमन्तरेण तत्प्रयोगः कर्तुं शक्यत इति तन्निश्चयात्मकज्ञानमपरिहार्यम्। **निश्चयश्चे**ति। (तेषां, पदार्थानां) निश्चायश्चा निर्णयश्चा, शब्दसंभेदेन वर्णात्मकशब्दस्पर्शद्वाराऽर्थं वाच्यादिकं गोचरीकरोति प्रत्याययति।

---

३. तत्रैव।

पदार्थनिश्चयः शब्दद्वारैव भवतीत्यर्थः। शब्दश्चार्थं बोधयति। एवं शब्दोऽर्थबोधने हेतुत्वमुपयाति। **शब्दस्येति**। शब्दस्य पदार्थप्रतिपादकस्य वर्णात्मकस्य ध्वन्यात्मकस्य वा मुख्येन, लाक्षणिकेन वाऽभिधाव्यापारेण तन्नामकशब्दवृत्त्या अर्थावगतौ अर्थप्रत्यायने हेतुत्वं कारणत्वम्। शब्दोऽभिधाव्यापारद्वाराऽर्थं बोधयतीत्यर्थः। स चाभिधाव्यापारो मुख्यलाक्षणिकत्वेन द्विविधः। तस्य चात्र विवेको विचारः क्रियत इति।

## (सुगमनी)

**इह खलु** इत्यादि। इस संसार में भोग एवं अपवर्ग (मोक्ष) के साधनभूत एवं उन दोनों (भोग एवं अपवर्ग) के अभाव के परित्याग के प्रयोजन हैं जो पदार्थ उनके निश्चय के बिना उन पदार्थों की व्यवहारयोग्यता नहीं बन पाती है। अर्थात् पदार्थ ही भुक्ति और मुक्ति के साधन होते हैं एवं भुक्ति तथा मुक्ति के जो बाधक तत्त्व होते हैं उनका परित्याग भी पदार्थों के द्वारा होता है। अतः उन पदार्थों के स्वरूप क्या हैं इनकी जानकारी के बिना उन्हें प्रयोग में लाना संभव नहीं है। पदार्थों की संख्या न्यायशास्त्र के अनुसार सोलह हैं , जैसे - प्रमाण, प्रमेय, संशय, प्रयोजन, दृष्टान्त, सिद्धान्त, अवयव, तर्क, निर्णय, वाद, जल्प, वितण्डा, हेत्वाभास, छल, जाति, और निग्रहस्थान। वैशेषिक दर्शन के अनुसार पदार्थों की संख्या सात होते हैं, जैसे -द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय और अभाव।

पदार्थों में प्राधान्य दिखलाने हेतु ग्रन्थकार लिखते हैं- **तथाहि** इत्यादि। प्रमाणों की संख्या विभिन्न शास्त्रों के अनुसार भिन्न भिन्न बताई गयी है। जैसे कि चार्वाक प्रत्यक्ष को ही एक मात्र प्रमाण मानते हैं। जब कि जैन, बौद्ध और वैशेषिक प्रत्यक्ष और अनुमान को मानते हैं। मध्वाचार्य के अनुयायी प्रत्यक्ष और शाब्द को मानते हैं। रामानुजीय दर्शन, पातञ्जल दर्शन एवं प्राच्य न्याय के अनुसार प्रत्यक्ष, अनुमान और शब्द तीन ही प्रमाण हैं। नव्य नैयायिक, वैयाकरण और शैव प्रत्यक्ष, अनुमान, उपमान और शाब्द इन चार प्रमाणों को मानते हैं। इन चारों के साथ अर्थापत्ति को भी पञ्चम प्रमाण के रूप में प्रभाकर मीमांसक मानते हैं। कुमारिलभट्ट के

अनुयायी मीमांसक एवं अद्वैतवादी पूर्वोक्त पाँचों के साथ अभाव को भी षष्ठ प्रमाण के रूप में मानते हैं। पौराणिक लोग पूर्वोक्त छः प्रमाणों के साथ संभव एवं ऐतिह्य को मिलाकर आठ प्रमाण मानते हैं। तान्त्रिक लोग चेष्टा को भी नवम प्रमाण के रूप में मानते हैं।

ये सभी प्रमाण प्रमेय के अवगति के कारण होते हैं। प्रमा (यथार्थ ज्ञान ) में जो भासित होता है उसे प्रमेय कहते हैं। और प्रमाण ही पदार्थों के निश्चयात्मक ज्ञान कराते हैं। अतः प्रमाणों को प्रधान माना जाता है।

पदार्थों के ज्ञान के मूल में प्रमाण होते हैं यह बतलाने हेतु लिखते हैं **प्रमाणनिबन्धना च** इत्यादि। भोग एवं अपवर्ग के साधन तथा उनके अभाव के परित्याग के हेतुभूत जो पदार्थ उनका ज्ञान प्रमाण से ही होता है।

उन पदार्थों की व्यवहारयोग्यता का कारण बतलाते हुए कहते हैं अतो निश्चय इत्यादि। 'यह इस प्रकार है' (इदमित्थम्) ऐसा निर्णय ही उन पदार्थों की व्यवहारयोग्यता का कारण है।

पदार्थों का निर्णय कैसे होता है यह बताते हैं- **निश्चयश्च** इत्यादि। शब्दप्रयोग से ही अर्थज्ञान होता है। पदार्थनिर्णय शब्दप्रयोग से ही होता है। इस प्रकार शब्द पदार्थज्ञान का हेतु होता है।

शब्द कैसे अर्थों का ज्ञान कराता है यह बताते हैं- **शब्दस्य** इत्यादि। शब्द मुख्य और लाक्षणिक अभिधाव्यापार से ही अर्थबोधन का कारण बनता है। इसीलिए मुख्य एवं लाक्षणिक अभिधाव्यापार का विचार इस ग्रन्थ अभिधावृत्तिमातृका में करते हैं। अर्थात् शब्द जिस व्यापार से अर्थ का बोध कराता है उसे अभिधाव्यापार कहते हैं। और अभिधाव्यापार मुख्य एवं लाक्षणिक के रूप में दो प्रकार का है। इस ग्रन्थ में उन्हीं मुख्य अभिधाव्यापार और लाक्षणिक अभिधाव्यापार का विचार किया गया है।

अभिधा नामक जो शब्दवृत्ति है उस की मातृका अर्थात् माता जैसी है। अतः इस ग्रन्थ का नाम अभिधावृत्तिमातृका है। कहीं कहीं 'अभिधावृत्तमातृका' यह नाम भी पाया जाता है। उनके मत में अभिधा के

जो वृत्त अर्थात् चरित है उसकी मातृका अर्थात् मातृस्वरूपिणी माँ जैसी।

(मातृका)

{मुख्यलाक्ष्यणिकयोरभिधाव्यापारयोः स्वरूपम्}

**कः पुनर्मुख्यो लाक्षणिको वाभिधाव्यापार इत्याशङ्क्य विशेषोपदर्शनद्वारेण मुख्यलाक्षणिकौ शब्दव्यापारावुपवर्णयितुमाह**

**शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।**
**अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते।। १ ।।**

**शब्दव्यापाराद् यस्यावगतिस्तस्य मुख्यत्वम्। स हि यथा सर्वेभ्यो हस्तादिभ्योऽवयवेभ्यः पूर्वं मुखमवलोक्यते, तद्वदेव सर्वेभ्यः प्रतीयमानेभ्योऽर्थान्तरेभ्यः पूर्वमवगम्यते। तस्मान्मुखमिव मुख्य इति शाखादियान्तेन मुख्यशब्देनाभीधीयते। तस्योदाहरणं 'गौरनुबन्ध्य' इति। अत्र हि गोशब्दव्यापाराद् यागसाधनभूता गोत्वलक्षणा जातिरवगम्यते। अतस्तस्या मुख्यता। तदेवं शब्दव्यापारगम्यो मुख्योऽर्थः। यस्य तु शब्दव्यापारगम्यार्थपर्यालोचनयावगतिस्तस्य लाक्षणिकत्वम्। यथा (गौरनुबन्ध्य इति) पूर्वस्मिन्नेवोदाहरणे व्यक्तेः। सा हि न शब्दव्यापारादवसीयते, 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायात् शब्दस्य जातिमात्रपर्यवसितत्वात्। जातिस्तु व्यक्तिमन्तरेण यागसाधनभावं न प्रतिपद्यत इति शब्दप्रत्यायितजातिसामर्थ्यादत्र जातेराश्रयभूता व्यक्तिराक्षिप्यते। तेनासौ लाक्षणिकी।**

**एवमयं मुख्यलाक्षणिकात्मविषयोपवर्णनद्वारेण शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो निरन्तरार्थविषयः सान्तरार्थनिष्ठश्च।**

## (सुबोधिनी)

**कः पुनरि**ति। कोऽसौ मुख्यलाक्षणिकत्वेन द्विविधोऽभिधाव्यापार इति जिज्ञासामुत्पाद्य विषयनिर्देशद्वारा मुख्यलाक्षणिकौ शब्दव्यापारौ शब्दशक्ती उपवर्णयितुं निर्णेतुमाह।

**शब्दव्यापारत** इति। यस्य मुख्यार्थस्य प्रतीतिर्ज्ञानं शब्दव्यापारतो शब्दस्य शक्तितो भवति तस्यार्थस्य मुख्यता। शब्दश्रवणानन्तरमव्यवधानेन यस्यार्थस्य प्रतीतिर्जायते स मुख्यार्थ इति। **अर्थावसेयस्ये**ति। अर्थादवसेयो ज्ञेयोऽर्थावसेयः, तस्यार्थस्य पुनर्लक्ष्यमाणत्वं लक्ष्यत्वमवगन्तव्यम्। शब्दान्मुख्यार्थप्रतीतेरनन्तरमेवाव्यभिचारेण यस्यार्थस्य प्रतीतिस्तस्य लक्ष्यतेति। शब्दश्रवणात्परमव्यवधानेन यस्यार्थस्य प्रतीतिस्तस्य मुख्यता। शब्दश्रवणात्परमव्यभिचारेण मुख्यार्थेन व्यवहितस्य च लक्ष्यतेति फलितम्।

तदेवं वृत्तावपि स्पष्टीकरोति ग्रन्थकारः **शब्दव्यापारादि**ति। शब्दव्यापारात् शब्दशक्त्या यस्यार्थस्यावगतिर्ज्ञानं तस्यार्थस्य मुख्यता। स हि मुख्यार्थो यथा सर्वेभ्योऽवयवेभ्यो करचरणादिभ्योऽङ्गेभ्यो पूर्वं प्राक् मुखं वदनमवलोक्यते दृश्यते, तद्वदेव, सर्वेभ्यः प्रतीयमानेभ्योऽर्थान्तरेभ्यः पूर्वमवगम्यते ज्ञायते। तस्मान्मुखमिव मुखसदृशो मुख्य इति शाखादियान्तेन शाखादिषु यान्तेन यप्रत्ययान्तेन मुख्यशब्देनाभिधीयते। 'शाखादिभ्यो यः, ५ / ३ / १०३' इति पाणिनिसूत्रेण सदृशार्थे यप्रत्यये मुख्यपदं मुखसदृशमित्यर्थे प्रयुज्यते। तथैव वाच्यार्थोऽपि करचरणाद्यवयवेषु प्रथमं मुखमिव लक्ष्यादिष्वर्थेषु पूर्वं वाच्यार्थः प्रागेवाभिधीयत इति तस्य सर्वप्रथमत्वान्मुख्यत्वमित्यर्थः। तस्य मुख्यार्थस्य वाच्यार्थस्योदाहरणं 'गौरनुबन्ध्यः' सास्नादिमत्प्राणिविशेषस्यानुबन्धनं विधेयमित्यर्थ इति। अत्र हि

गोशब्दव्यापाराद् 'गो' इति शब्दस्य शक्त्या यागसाधनभूता यज्ञस्य सहायकवस्तुस्वरूपा, गोत्वलक्षणा गोत्वं लक्षणं स्वरूपं यस्याः सा गोत्वस्वरूपा जातिः सामान्यम् (अन्यूनानतिरिक्तधर्मः) अवगम्यते। अतो गोशब्दोच्चारणाव्यवहितप्रतीतेस्तस्य गोत्वजातिरूपार्थस्य मुख्यता। तदेवं गोत्वजातिरूपार्थः गोशब्दव्यापारगम्यो मुख्यार्थ इति।

**यस्य** त्विति। यस्यार्थस्य, त्विति व्यतिरेके, शब्दव्यापारगम्यार्थपर्यालोचनया शब्दव्यापारेण गम्यस्य मुख्यार्थस्य पर्यालोचनया परिशीलनेनावगतिर्ज्ञानं तस्यार्थस्य लाक्षणिकत्वं लक्ष्यत्वमित्यर्थः। यथा पूर्वस्मिन्नेवोदाहरणे 'गौरनुबन्ध्य' इत्यत्र व्यक्तेर्गोव्यक्तिविशेषस्य (प्रतीतिर्जायते)। यज्ञस्थले तत्साधनभूतो गोविशेषोऽनुबन्ध्यो भवति। गोपदसमुच्चारणेन मुख्योऽभिधाव्यापारः समुदायात्मिकां गोत्वजातिं बोधयति। किन्तु समुदायात्मिकाया गोत्वजातेरनुबन्धनमसम्भवमित्यर्थपर्यालोचनायाः परं गोव्यक्तेरनुबन्धनं कार्यमित्यर्थो लाक्षणिकेनाभिधाव्यापारेण प्रतीयते। सा हि व्यक्तिः गोरूपा, न शब्दव्यापारात् शब्दशक्त्याऽवसीयते निश्चीयते ज्ञायते वा, 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायात्, विशेषणे गोत्वजातिरूपेऽर्थे क्षीणशक्तिः नष्टशक्तिरभिधा मुख्या वृत्तिः, विशेष्यं गोव्यक्तिरूपं न गच्छेन्न प्रसरेत्। अभिधाशक्तिर्हि गोत्वजातिरूपमर्थं बोधयित्वा विरता भवति, न तत्र गोव्यक्तिं बोधयितुं पुनरपि सामर्थ्यं भवति, 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति न्यायात्। अतः शब्दस्य गवादिरूपस्य जातिमात्रपर्यवसितत्वात् गोत्वजातिमात्रार्थे विरतत्वात्, जातिस्तु गोत्वादिरूपा व्यक्तिमन्तरेण गोव्यक्त्यादिं विना, यागसाधनभूतं, न प्रतिपद्यते नैव प्राप्नोतीति शब्दप्रत्यायितजातिसामर्थ्यादत्र प्रस्तुते जातेराश्रयभूता 'निर्विशेषं न सामान्यमि' ति न्यायात् सामान्यस्याश्रये विशेषस्त्वस्त्येवेति व्यक्तिर्विशेषभूता आक्षिप्यते मुख्यवृत्तिभिन्नेन व्यापारान्तरेण बोध्यते।

तेनासौ गोव्यक्तिर्लाक्षणिकीत्यर्थः। एवमयं शब्दस्याभिधाव्यापारो द्विविधः प्रतिपादितो मुख्यो लाक्षणिकश्चेति। स च **निरन्तरार्थविषयः सान्तरार्थनिष्ठश्चे**ति। अन्तरेण व्यवधानेन रहितं निरन्तरं, तच्च विषयो यस्य स निरन्तरार्थविषयो मुख्योऽभिधाव्यापारः। शब्दार्थयोर्मध्ये व्यवधानाभावात् मुख्यस्याभिधाव्यापारस्य निरन्तरार्थविषयत्वं बोध्यम्। अन्तरेण व्यवधानेन सहितः सान्तरो योऽर्थस्तन्निष्ठस्तदाधारितो व्यापारो सान्तरार्थनिष्ठो लाक्षणिकत्वेनाभिधीयते। अत्र च गोशब्द-गोव्यक्तिमध्ये गोत्वजातिरूपस्य मुख्यार्थस्य व्यवधानाल्लाक्षणिकस्य व्यापारस्य सान्तरार्थनिष्ठत्वमित्यर्थः।

## (सङ्क्रमनी)

**कः पुनः** इत्यादि। मुख्य अभिधाव्यापार क्या है और लाक्षणिक अभिधाव्यापार क्या है? इस प्रश्न के समाधान हेतु मुख्य एवं लाक्षणिक शब्दव्यापारों के परिचय के साथ उल्लेख करते हुए कहते हैं–

**(कारिका)** शब्दव्यापार से जिस अर्थ की प्रतीति होती है उसे मुख्य अर्थ कहते हैं एवं मुख्यार्थप्रतीति के बाद जिस अर्थ की प्रतीति होती है उसे लक्ष्यार्थ कहते हैं।

जो अर्थ साक्षात् शब्दव्यापार से प्रतीत होता है वह मुख्यार्थ है। जैसे शरीर के हस्त आदि सभी अवयवों से पहले मुख दिखता है उसी प्रकार अन्य सभी प्रतीयमान अर्थों से पहले वाच्यार्थ प्रतीत होता है; और इसीलिए उसे मुख्यार्थ कहा जाता है। जैसे 'शाखादिभ्यो यः, ५ / ३ / १०३' इस पाणिनिसूत्र से (जिस का अर्थ शाखादिगणों से सदृश अर्थ में यप्रत्यय होता है) मुख के सदृश मुख्य यह रूप बनता है। 'गौरनुबन्ध्यः' अर्थात् गाय का अनुबन्धन करना चाहिए। यहाँ गोशब्द से प्राथमिक शब्दशक्ति से यज्ञ के साधनभूत गोत्वजाति यह अर्थ प्रतीत होता है। अतः गो-शब्द का गोत्वजातिरूप अर्थ मुख्यार्थ होता है। जो अर्थ शब्दव्यापार से बोध्य वाच्यार्थ के पर्यालोचन से अवगत होता है उसे लाक्षणिक या लक्ष्यार्थ कहा जाता है। जैसे कि गो-शब्द से प्रतीत गोत्वजाति रूप मुख्यार्थ के पर्यालोचन

से यह सिद्ध होता है कि गोत्वजाति का यज्ञ के साधन रूप में बन्धन संभव नहीं है। अत: गो-व्यक्ति का बन्धन होना चाहिए यह लक्ष्यार्थ है। वह गो-व्यक्तिरूप अर्थ शब्द व्यापार से प्रतीत नहीं हो सकता है। 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे' अर्थात् अभिधा शक्ति गोत्व-जाति रूप (विशेषण) अर्थ में अपनी शक्ति को खोकर गो-व्यक्ति रूप विशेष्य को बताने में समर्थ नहीं हो पाती है। इस न्याय से शब्द जाति रूप मुख्यार्थ में ही विरत हो जाती है। गो-शब्द गो-व्यक्ति रूप अर्थ को बताने में असमर्थ है। क्यों कि कहा गया है- 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव:' अर्थात् शब्द, बुद्धि और कर्म अपना अपना व्यापार के पश्चात् रूक जाते हैं। इस न्याय से गो शब्द गोत्वजाति रूप अर्थ को बताकर जब रुक जाता है तब उसमें पुन: अर्थान्तर को बताने की शक्ति नहीं रह जाती है। 'गौरनुबन्ध्य:' यहाँ गोत्वजाति गोव्यक्ति के बिना यज्ञ के साधनत्व को प्राप्त नहीं कर सकता है। इसीलिए गोशब्दद्वारा प्रतीत गोत्वजाति के सामर्थ्य से जाति के आश्रयभूत गोव्यक्ति लाक्षणिक अभिधाव्यापार से प्रतीत होता है। इस प्रकार गोव्यक्ति रूप अर्थ लक्ष्यार्थ है।

इस प्रकार मुख्य एवं लाक्षणिक के रूप में शब्द का अभिधा व्यापार दो प्रकार का होता है। उन दोनों में से मुख्य अभिधा व्यापार को निरन्तरार्थविषय कहा जाता है क्योंकि वहाँ शब्द एवं मुख्यार्थ के बीच कोई अर्थान्तर व्यवधान के रूप में नहीं आता है। लाक्षणिक अभिधा व्यापार को सान्तरार्थनिष्ठ कहा जाता है। क्योंकि वहाँ शब्द एवं लक्ष्यार्थ के बीच में व्यवधान के रूप में मुख्यार्थ रहता है। जैसा कि गोशब्द और गोव्यक्ति के बीच गोत्वजाति व्यवधान के रूप में रहता है। शब्द से अर्थबोधन का क्रम निम्न प्रकार से है। जैसे कि-

**गोशब्द: → गोत्वजाति: (मुख्यार्थ:) → गोव्यक्ति: (लक्ष्यार्थ:)**

## (मातृका)

{जात्यादिभेदेन मुख्यस्याभिधाव्यापरस्य प्रकारचतुष्टयम्}

संप्रति मुख्याभिधाव्यापारस्य चातुर्विध्यमभिधीयते-

तत्र मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदतः।

तयोर्मुख्यलाक्षणिकयोरर्थयोर्मध्यान्मुख्यार्थस्य चत्वारो भेदाः, जात्यादिभेदात्। चतुष्टयी हि शब्दानां प्रवृत्तिर्भगवता महाभाष्यकारेणोपवर्णिता 'जातिशब्दा गुणशब्दाः क्रियाशब्दा यदृच्छाशब्दाश्चे'ति। तथाहि सर्वेषां शब्दानां स्वार्थाभिधानाय प्रवर्तमानानामुपाध्युपरञ्जितविषयविवेकत्वादुपाधिनिबन्धना प्रवृत्तिः। उपाधिश्च द्विविधः वक्तृसन्निवेशितो वस्तुधर्मश्च। कश्चित् खलु वक्त्रा तस्मिंस्तस्मिन् वस्तुन्युपाधितया सन्निवेश्यते, कश्चित्तु वस्तुधर्म एव। तत्र यो वक्त्रा यदृच्छया तत्तत्संज्ञिविषयद्वारेण तस्मिंस्तस्मिन् संज्ञिनि संनिवेश्यते स वक्तृसंनिवेशितः, यथा डित्थादीनां शब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपम्। तत् खलु तां तामभिधाशक्तिमभिव्यञ्जयता वक्त्रा यदृच्छया तास्मिंस्तास्मिन् संज्ञिनि उपाधितया संनिवेश्यते। अतस्तन्निबन्धना यदृच्छाशब्दा डित्थादयः। येषामपि च डकारादिवर्णव्यतिरिक्तासंहृतक्रमस्वरूपाभावान्न डित्थादिशब्दस्वरूपं संहृतक्रमं संज्ञिष्वध्यवस्यते इति दर्शनं तेषामपि वक्तृयदृच्छाभिव्यज्यमानशक्तिभेदानुसारेण काल्पनिकसमुदायरूपस्य डित्थादेः शब्दस्य तत्तत्संज्ञाभिधानाय प्रवर्त्तमानत्वाद् यदृच्छाशब्दत्वं डित्थादीनामुपपद्यत एव। तदेवं पूर्वमुपदर्शितो यो वैयाकरणनयः तदाश्रयेण उपाधिवक्तृसन्निवेशितस्वरूपाख्यो व्याख्यातः।

यस्य तु वस्तुधर्मत्त्वेनोपाधेरवस्थानं तस्यापि द्वैविध्यम्, साध्यसिद्धताभेदात्। तत्र साध्योपाधिनिवन्धनाः क्रियाशब्दाः,

**यथा पचतीति। सिद्धस्य तूपाधिद्वैविध्यम्, जातिगुणभेदात्। कस्यचित्खलु सिद्धस्योपाधिः पदार्थस्य प्राणपदता, यथा जातेः, न हि कश्चित्पदार्थो जातिसंबन्धमन्तरेण स्वरूपं प्रतिलभते, यदुक्तं वाक्यपदीये- 'गौरिति न हि गौः स्वरूपेण गौः नाप्यगौः, गोत्वाभिसंबन्धात्तु गौः'- इति। कश्चित्पुनरुपाधिर्लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुः, यथा शुक्लादिर्गुणः। न हि शुक्लादेर्गुणस्य पटादिवस्तुस्वरूपप्रतिलम्भनिबन्धनम्, जातिमहिम्नैव तस्य वस्तुनः प्रतिलब्धस्वरूपत्वात्। अतोऽसौ लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुः। येऽपि च नित्या परमाणुत्वादयो गुणास्तेषामपि सर्वेषां गुणजातीयत्वा-देवंप्रकारत्वमेव। तदेवं प्राणपदोपाधिनिबन्धनत्वं यस्य शब्दस्य स जातिशब्दो यथा गवादिः। यस्माल्लब्धस्वरूपस्य वस्तुनो विशेषाधानहेतुरर्थः प्रतीयते स गुणशब्दो यथा शुक्लादिः।**

## (सुबोधिनी)

**संप्रतीति**। अभिधाव्यापारस्य मुख्यलाक्षणिकत्वेन द्वैविध्यं प्रतिपाद्य मुख्यस्याभिधाव्यापारस्य चातुर्विध्यं चतुष्प्रकारत्वं दर्शयितुं भूमिकां परिकल्पयति संप्रतीत्यादिना।

**तत्रेति**। तत्र मुख्यलाक्षणिकयोरभिधाव्यापारयोर्मुख्यार्थ-लक्ष्यार्थयोर्वा जात्यादिभेदतश्चतुर्भेदो ज्ञेयोऽवगन्तव्य इत्यर्थः।

ननु के तावज्जात्यादयः? किं च प्रमाणं मुख्यार्थस्य जात्यादिभेदेन चतुर्धात्वेन? इत्यादिकां जिज्ञासां शमयितुं वृत्तिकारः प्राह-**तयोर्मुख्यलाक्षणिकयोरित्यादि**। तयोर्मुख्यलाक्षणिकयो-रर्थयोर्मध्यान्मुख्यस्यार्थस्य चत्वारो भेदाः, जात्यादिभेदादिति स्पष्टम्। **चतुष्टयीति**। शब्दानामर्थप्रतिपादकानां वर्णानां, चतुष्टयी प्रवृत्तिः चतुष्प्रकारो व्यवहारो, भगवता महाभाष्यकारेण पतञ्जलिना, उपवर्णिता

कथिता- जातिशब्दा गोत्वादयः, गुणशब्दाः शुक्लादयः, क्रियाशब्दाः पठति-पचतीत्यादयो, यदृच्छाशब्दा देवदत्तादयो वक्तुरिच्छया सन्निविष्टा इति। महाभाष्यकारः पतञ्जलिर्हि व्यक्तेरुपाधिषु चतूर्णां जातिगुणक्रियायदृच्छानां प्रवृत्तिनिमित्तत्वं प्रतिपादयति। उक्तं हि तेन ऋलृक्सूत्रवार्तिकव्याख्याने 'चतुष्टयी शब्दानां प्रवृत्तिः - जातिशब्दा, गुणशब्दाः, क्रियाशब्दा, यदृच्छाशब्दाश्चतुर्था'[४] इति। अतो शब्दानां जातिगुणक्रियायदृच्छासु चतुर्षूपाधिषु प्रवृत्तिर्भवतीति महाभाष्यकारस्य भगवतः पतञ्जलेरपि सम्मतिरस्तीति तन्मतमिहोपस्थापितं स्वमतदार्ढ्याय ग्रन्थकारेण। तत्र जात्यादीनामुपाधीनां प्रवृत्तिनिमित्तत्वं साधयितुमाह **तथाही**ति। तथाहि प्रवर्त्तमानानां व्यवहारे प्रयुज्यमानानां, सर्वेषां शब्दानां जात्यादीनां, उपाधिभिः जातिगुणक्रियायदृच्छारूपैः, उपरञ्जिता युक्ता, ये विषयाः पदार्थास्तैर्विवेको भेदज्ञानं येषां ते, तेषां भावस्तस्माद्, उपाध्युपरञ्जितविषयविवेकत्वात् जात्याद्युपाधियुक्तपदार्थभेदज्ञानत्वाद्, उपाधिनिबन्धना उपाधयो जात्यादिरूपा निबन्धनानि कारणानि यस्याः सा उपाधिकारणा, प्रवृत्तिर्व्यवहारः। शब्दानां परस्परं भेदज्ञानं तन्निष्ठोपाधिभिरेव कर्तुं शक्यत इति तेषां प्रवृत्तौ शब्दनिष्ठोपाधिरेव कारणम्। यथा 'चित्राख्या शुक्ला गौश्चरति' इत्यत्र चित्रादिषु शब्देषूपाधय एव चित्रादीनां शब्दानां प्रवृत्तौ निबन्धनानि कारणानि। अत्र चित्रेति यदृच्छाशब्दः, शुक्लेति गुणशब्दः, गौरिति जातिशब्दः, चरतीति क्रियाशब्दः। एतेषामुपाधीनां विषयविभागं कर्तुमाह **उपाधिश्चे**ति। [५]उपाधिश्च द्विविधः द्विप्रकारकः, प्रथमो वक्तृसन्निवेशितः वक्त्रा (गवादिषु

---

४. व्याकरणमहाभाष्यं, ऋलृक्सूत्रव्याख्यानम्, चौखम्बासंस्कृतप्रतिष्ठान, दिल्ली, १९८७.

५. उपदधाति स्वधर्ममभिधादिकं व्यक्तौ संक्रामयतीति जात्यादिव्यक्तिधर्म उपाधिः इत्युच्यते।

पदार्थेषु स्वेच्छया चित्रादित्वेन देवदत्तादित्वेन डित्थादित्वेन वा) सन्निवेशितः स्थापितः, द्वितीयो वस्तुधर्मः वस्तुनि विद्यमानो जातिगुणक्रियारूप आन्तर्धर्मः। तदेव परिष्कुर्वन्नाह **कश्चिदिति**। वक्त्रा तस्मिंस्तस्मिन् गवादिरूपे वस्तुनि (चित्राद्युपाधितया डित्थाद्युपाधितया वा) संनिवेश्यत आरोप्यत इत्यर्थः। कश्चिच्चापरो वस्तुधर्म एव वस्तुनिष्ठो जात्यादिरूपान्तर्धर्म एव। तत्र वक्तृसन्निवेशितमुपाधिं विवृण्वन्नाह **तत्र यो वक्त्रेति**। तत्र वक्तृयदृच्छासन्निवेशितवस्तुधर्मयोः, य उपाधिर्यदृच्छया स्वेच्छया, तत्तत्संज्ञिरूपा ये विषयास्तेषां शक्तीनामभिधारूपाणा-मभिव्यक्तिद्वारेण प्रकाशनमाध्यमेन तस्मिंस्तस्मिन् संज्ञिनि गवादिरूपे वस्तुनि, संनिवेश्यत आरोप्यते स्थाप्यते वा, स वक्तृसंनिवेशितः। यथोदाहरणतो, डित्थादीनां डित्थडवित्थचैत्रप्रभृतीनां निर्हेतूनां वक्त्रा स्वेच्छया प्रयुक्तानां शब्दानाम्, अन्त्यबुद्धिनिर्ग्राह्यं अन्त्यबुद्धिः पदस्फोटात्मिकाऽन्तिमा बुद्धिः तया निर्ग्राह्यं निश्शेषेण ग्रहणीयं, संहृतक्रमं विलीनवर्णस्फोटक्रमो यस्य तत्, स्वरूपं स्फोटात्मकं रूपम्। अत्रेदमवधेयं यद्- डित्थादिशब्दानामर्थबोधकत्वं नाद्येन डकारमात्रेण, नापि डकारादिवर्णसमुदायेन, वर्णानामुच्चरितप्रध्वंसित्वेन यौगपद्यस्यासंभवाद् वर्णसमुदायस्य ग्रहीतुमशक्यत्वात्। तस्मात् पूर्वपूर्ववर्णानुभवजनित-संस्कारसहकृतान्त्यपदश्रवणेन या सदसदनेकवर्णावगाहिनी संस्कारात्मिका मानसी प्रतीतिर्जायते सा पदस्फोटत्वेन वैयाकरणैरभिधीयते। सैव पूर्वपूर्ववर्णानुभवजनित-संस्कारसहितान्त्यबुद्धिः, तया च निर्ग्राह्यं निश्शेषेण ग्राह्यं, डकारादिक्रमरहितं, डित्थादिपदं रूढरूपम्। **तत्खलु त्विति**। तत् संहृतक्रमं यौगिकार्थरहितं रूढस्वरूपं तां तामभिधाशक्तिमभिधाव्यापारम्, अभिव्यञ्जयता प्रकाशयता, वक्त्रा, तस्मिंस्तस्मिन् संज्ञिनि गवादिपदार्थे, उपाधितया संज्ञारूपेण, संनिवेश्यत आरोप्यते। वक्ता गवाद्यर्थे चित्रादिपदमुपाधित्वेनारोप्य तत्राभिधाशक्तिं स्वीकरोतीत्यर्थः। अतो

गवादिषु पदार्थेषु चित्रादिपदोपाध्यारोपरूपा यदृच्छाशब्दाः चित्रादयो डित्थादयो वा। अर्थाद् गवि चित्रात्वमस्तु वा मास्तु वा, वक्ता गां चित्रादिपदेनाभिदधाति। तादृश्यभिव्यक्तिर्हि यदृच्छात्मिका। यादृशमारोपितं वस्तुधर्मं निमित्तं कृत्वा यः शब्दोऽर्थेषु प्रवर्त्तते स यदृच्छात्मकः शब्द इत्यर्थः। तत्र पक्षान्तरं दर्शयितुमाह **येषामपी**ति। येषामपि डकारादिवर्णव्यतिरिक्तानां संहृतक्रमस्वरूपाभावात् (डित्थादिषु डकारादिवर्णक्रमस्त्वस्त्येवेति तत्क्रमाभावे तत्स्वरूपाभावात्) संज्ञिषु पदार्थेषु, डित्थादिशब्दस्वरूपं संहृतक्रमं, नाध्यवस्यते नाऽऽरोप्यते। डित्थाद्यर्थं विना डित्थादिशब्दप्रयोगाभावात्, डित्थादिपदाभिहिते पदार्थे, डित्थत्वाद्यभावाद्वा मास्तु पदार्थे डित्थादिशब्दारोपः, परं तेषामपि डित्थादिपदाभिहिते डित्थत्वमस्वीकुर्वतां, वक्तृयदृच्छाभिव्यज्यमान-शक्तिभेदानुसारेण वक्तृयदृच्छया कल्पितया अभिव्यज्यमानायाः प्रकाश्यमानायाः, शक्तेरभिधाशक्तेर्भेदानुसारेण, काल्पनिक-समुदायरूपस्य यदृच्छात्मकसमुदायरूपस्य संहृतक्रमाभावस्य वर्णसमुदायात्मकस्य, डित्थादेः शब्दस्य, तत्तत्संज्ञाभिधानाय डित्थादिकल्पितनामाभिधानाय, प्रवर्त्तमानत्वात् प्रयुज्यमानत्वात्, डित्थादीनां शब्दानां यदृच्छाशब्दत्वमुपपद्यत एव। अर्थाद् येऽपि डित्थादिपदेनाभिहितेषु पदार्थेषु डित्थत्वं न स्वीकुर्वन्ति तेऽपि कल्पितडित्थादिसंज्ञासु यदृच्छाशब्दत्वं स्वीकुर्वन्त्येवेति डित्थादीनां यदृच्छाशब्दत्वं संगच्छते। **तदेवमि**ति। तदेवमुपरिदर्शितप्रकारेण पूर्वमुपदर्शितो यो व्याकरणनयो डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमस्वरूपमिति व्याकरणदर्शनं, तदाश्रयेण तदाधारेण, वक्तृसंनिवेशितस्वरूपाख्य उपाधिः व्याख्यात इति स्पष्टम्।

**यस्य त्वि**ति। यस्योपाधेः, त्विति व्यतिरेके, वस्तुधर्मत्वेन वस्तुन आन्तरिकधर्मत्वेनावस्थानमवस्थितिस्तस्यापि, द्वैविध्यं द्विप्रकारत्वं, साध्यसिद्धताभेदात् साध्यश्च सिद्धश्च तयोर्भावौ साध्यसिद्धते तावेव भेदौ

यस्य तस्मात्। यदृच्छाधर्मव्यतिरिक्तस्य वस्तुधर्मोपाधेः साध्यसिद्धत्वेन द्विप्रकारत्वमित्यर्थः। **तत्रेति**। तत्र साध्यसिद्धयोरुपाध्योः साध्योपाधेः, निबन्धनाः कारणानि, क्रियाशब्दाः क्रियापदानि, यथा पचतीति स्पष्टम्। **सिद्धस्येति**। सिद्धस्य प्राप्तस्वरूपस्य, उपाधेस्तु, द्वैविध्यं द्विप्रकारत्वं, जातिगुणभेदादिति स्पष्टम्। **कस्यचिदिति**। कस्यचित् तयोर्जातिगुणयोरेकस्य, खलु निश्चयेन वाक्यालंकारे वा, सिद्धस्योपाधेरिति स्पष्टम्, पदार्थस्य गवादेः, प्राणपदता स्वरूपाधायकता, यथा जातेर्गोत्वादेर्धर्मस्य, न हि कश्चित् पदार्थः, जातिसंबन्धमन्तरेण, जातेर्गोत्वादेः सामान्यस्य प्राणपदताधर्मस्य वा, संबन्धमन्तरेण संस्पर्श विना, स्वरूपमात्मरूपं गवादिं, प्रतिपद्यते प्राप्नोति। यदुक्तं वाक्यपदीये भर्तृहरिप्रणीते व्याकरणशास्त्रीयपदार्थविचारात्मके ग्रन्थविशेषे, गौरिति पदार्थविशेषः, सास्नादिमान् प्राणिविशेषः, स्वरूपेणाऽऽत्मना, न गौः न गोपदवाच्यः, नाप्यगौर्नापि गोपदावाच्यः, गोत्वाभिसंबन्धात्तु गोत्वजातिसंपर्कात्तु, गौरिति। अयमर्थः संसारे न कश्चित् पदार्थोऽस्ति यो हि तज्जातिसंबन्धं विनैव तत्स्वरूपं प्रतिलभते। वाक्यपदीये भर्तृहरिणाप्युक्तं सास्नादिमति प्राणिविशेषे पदार्थविशेषे वा, गोपदव्यवहारो गोत्वजातिसंबन्धादेव भवति। यावद्गवि गोत्वं नास्ति, तावत्तस्य तत्स्वरूपापत्तिर्भवितुं न शक्नोति। अतो जातिरेव स्वरूपापत्तिरूपः पदार्थस्य प्राणप्रदः सिद्धधर्मः। यो धर्मः सत्ताप्राप्तिकाले सिद्धो जायतेऽसौ सिद्धधर्मः। न हि गव्यश्वत्वाधानं संभवम्, नापि शुक्लादयो गुणाः कृष्णादित्वेन परिणमन्ते। अतः सत्तासादनकाले ये धर्माः सिद्धा भवन्ति, सिद्धतादशायां च यत्र परिवर्तनमानेतुं न शक्यतेऽसौ सिद्धधर्मः। **कश्चिदिति**। कश्चित्पुनरुपाधिः सिद्धोपाधिः, लब्धस्वरूपस्य वस्तुनो गोत्वादिना प्राप्तस्वरूपस्य वस्तुनः, विशेषाधानहेतुः भेदाधानकारणं, यथा शुक्लादिर्गुणः। **नहीति**। शुक्लादेर्गुणस्य विशेषाधानहेतोः, पटादिवस्तुस्वरुपप्रतिलम्भनिबन्धनत्वं पटादेर्वस्तुनः

स्वरूपप्रतिलम्भस्य स्वरूपापत्तेः, निबन्धनत्वं कारणत्वं नेति। जातिमहिम्नैव जात्याधारेणैव, तस्य वस्तुनः पटादेः, प्रतिलम्भस्वरूपत्वात् प्राप्तस्वरूपत्वात्। **अतोऽसाविति**। असौ शुक्लादिर्गुणः, लब्धस्वरूपस्य वस्तुनः प्राप्तस्वरूपस्य गोपिण्डादेः पदार्थस्य, विशेषाधानहेतुर्भेदज्ञानकारणम्। गोत्वादिजातिमहिम्ना प्राप्तस्वरूपस्य गवादेर्वस्तुनः शुक्लादिगुणद्वारा कृष्णगवादिभ्यो भेदज्ञानं जायत इति शुक्लादयो गुणा भेदबुद्धेः कारणानि भवन्तीति ते शुक्लादयो गुणा विशेषाधानहेतव इत्युच्यन्ते। **येऽपीति**। येऽप्यन्ये नित्याः परमाणुत्वादयो गुणाः परमाण्वादीनां परमाणुपरिमाण-परममहत्परिमाण-परमह्रस्वपरिमाण-परमदीर्घपरिमाणेषु यः परमाणुपरिमाणस्तस्य पृथिव्यादिनवद्रव्याणां सूक्ष्मतमेष्ववयवेष्वविभाज्यरूपेण विद्यमानत्वात्, परमाणुरूपस्य सूक्ष्मतमपदार्थस्य प्राणप्रदधर्मत्वाच्च जातित्वं नित्यत्वञ्चेति। परं तेऽपि नित्याः परमाणुशब्दाः गुणजातीया इति रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्व-गुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारादिगुणेषु पठिता इति तेषामपि परमाणुशब्दानामप्येवं प्रकारत्वमेव विशेषाधानहेतुत्वमेवेति। **तदेवमिति**। यस्य शब्दस्य प्राणप्रदोपाधिनिबन्धनत्वं स्वरूपापत्तिकारणत्वं स शब्दः जातिशब्दो यथा गवादिः। गोत्वादिरूपप्राणप्रदोपाधियुक्तत्वाद् गवादीनां शब्दानां जातिशब्दत्वम्। **यस्मादिति**। यस्मात् शब्दात्, लब्धस्वरूपस्य वस्तुनःगवादिरूपस्य प्राप्तस्वरूपस्य पदार्थस्य, विशेषाधानहेतुरर्थो भेदाधानभूतोऽर्थः , प्रतीयते ज्ञायते, स गुणशब्दः, यथा शुक्लादिः।

एवमुपाधिः जातिगुणक्रियायदृच्छात्वेन चतुर्विधः। पदार्थस्य प्राणप्रदधर्मो गोत्वादिर्जातिः विशेषाधानहेतुः शुक्लादिर्गुणः, साध्योपाधिभूता पचत्यादिक्रिया, डित्थादिश्च वक्तृयदृच्छारूपोपाधिरिति। एतेषु जातिगुणक्रियाणां वस्तुनिष्ठान्तर्धर्मत्वं, यदृच्छाशब्दश्च वक्त्रा

स्वेच्छयाऽऽरोप्यत इति बाह्यधर्मत्वम्। जातिगुणक्रियारूपेषु वस्तुनिष्ठेषु धर्मेषु जातिगुणयोः सिद्धत्वं, क्रियायाश्च परिवर्तनशीलधर्मत्वात् साध्यत्वम्। न हि कश्चित् पदार्थः प्राणी वा सदैवैकामेव क्रियां समाचरति, यथा गौः कदाचिच्चरति, कदाचिच्चलति, कदाचिच्च स्वपिति। अत एव क्रियायाः साध्यत्वमित्यवगन्तव्यम्। जातिगुणयोरपि जातेः प्राणप्रदत्वं, गुणस्य च विशेषाधानहेतुत्वमिति विवेकः। जात्याद्युपाधिचतुष्टयस्य वर्गीकरणचित्रमधः प्रदीयते।




## (सङ्क्रमनी)

**संप्रति** इत्यादि। अभी मुख्य अभिधा व्यापार के चार भेदों को बतलाने के लिए कहते हैं-

**(कारिका)** मुख्य एवं लाक्षणिक अभिधा व्यापार में से मुख्य अभिधा व्यापार जाति अदि भेद से चार प्रकार का है।

मुख्य एवं लाक्षणिक रूप दो अर्थों में से मुख्यार्थ के चार भेद हैं- जाति आदि भेद से। शब्दों की चार प्रकार की प्रवृत्ति महाभाष्यकार पतञ्जलि ने भी कही है- जातिशब्द गोत्व आदि, गुणशब्द शुक्ल आदि, क्रियाशब्द

पठति आदि एवं यदृच्छाशब्द देवदत्त आदि। महाभाष्यकार पतञ्जलि ने व्यक्ति के इन चार उपाधियों को ही शब्दों की प्रवृत्ति अर्थात् व्यवहार के निमित्त मानते हैं। क्यों कि उन्होंने ऋलृक्सूत्रवार्तिक के व्याख्यान करते हुए कहा कि शब्दों की चार प्रकार की प्रवृत्ति होती है- जातिशब्द, गुणशब्द, क्रियाशब्द, और यदृच्छाशब्द। इस प्रकार अपने मत की पुष्टि के लिए मुकुलभट्टजी ने महाभाष्यकार महर्षि पतञ्जलि के मत को भी उपस्थापित किया है। क्योंकि व्यवहार में आने वाले सभी शब्दों में आपस में भेद उनके उपाधियों से ही होता है। अत: उपाधि ही उन शब्दों की प्रवृत्ति के निमित्त है। जैसा की 'चित्रा नामक श्वेत गाय चर रही है' इस वाक्य में चित्रा आदि शब्दों में न्यस्त उपाधि ही उन शब्दों के परस्पर में भेदज्ञान के कारण हैं। यहाँ चित्रा यदृच्छाशब्द, श्वेत गुणशब्द, गाय जातिशब्द और चरती है यह क्रिया शब्द हैं।

उपाधि दो प्रकार के हैं; वक्ता के द्वारा स्थापित एवं वस्तु का धर्म। उन दोनों में से वक्ता स्वयं अपनी इच्छा से वस्तु में जिस देवदत्त आदि यदृच्छाशब्द को स्थापित करता है, उसे वक्तृसंन्निवेशित उपाधि कहा जाता है। जैसे डित्थ आदि संज्ञा-शब्द जो कि अन्त्यबुद्धि के द्वारा ग्राह्य होते हैं एवं उनके स्वरूप में कोई क्रम विद्यमान नहीं रहता है। क्यों कि उनका स्वरूप अवास्तव एवं रूढ रूप होता है। यहाँ डित्थ आदि पदों के स्वरूप के दो विशेषण दिए गये हैं- अन्त्यबुद्धिनिर्ग्राह्य एवं संहृतक्रम। तात्पर्य यह है कि डित्थ आदि पदों के डकारमात्र से नहीं और न ही डकारादि वर्णसमुदाय से अर्थ प्रतीत होता है। क्यों कि वर्ण तो उच्चारण के पश्चात् विलीन हो जाते हैं। अत: पूर्व पूर्व वर्णों के अनुभव से उत्पन्न संस्कार के साथ जो अन्त्य वर्ण की बुद्धि होती है, वही जिसका स्वरूप है, उसे अन्त्यबुद्धिनिर्ग्राह्यस्वरूप कहा जाता है। संहृतक्रम का अर्थ है यौगिकार्थरहित केवल रूढरूप। अर्थात् वस्तु में उस शब्द का तात्त्विक संबन्ध भले ही न हो वह केवल एक क्रमरहित आरोपित सत्ता है। जैसे गाय में चित्रात्त्व धर्म हो या न हो वक्ता उसे चित्रा नाम से पुकारता है। वहाँ चित्रा यह

संहृतक्रमस्वरूप वाला यदृच्छा शब्द है।

उस यदृच्छाशब्द को वक्ता वक्ता अभिधाशक्ति की अभिव्यञ्जना करते हुए उन उन संज्ञिओं (पदार्थों) में उपाधि के रूप में स्थापित करता है। इसीलिए वक्ता के द्वारा अपनी इच्छा से उन उन वस्तुओं में डित्थ आदि संज्ञाओं को आरोपित करने से डित्थ आदि यदृच्छा शब्द होते हैं।

और जिन का "डकारादि से भिन्न वर्णों के रूढरूप नहीं होने से क्रमरहित डित्थ आदि स्वरूपवाले शब्द संज्ञिओं में आरोपित नहीं किये जा सकते हैं। क्यों कि डित्थ आदि संज्ञा से अभिहित पदार्थों में डित्थत्वादि धर्म के न रहने से डित्थ आदि शब्दारोप नहीं होना चाहिए" ऐसा मत है, उनके अनुसार भी इस बात को अस्वीकार नहीं किया जा सकता है कि वक्ता अपनी इच्छानुसार किसी क्रमविशेष में प्रयुक्त वर्णविशेषवाले काल्पनिक डित्थ आदि शब्द जो वस्तुतः केवल काल्पनिक वर्णसमुदायमात्र हैं, संज्ञा के रुप में डित्थ आदि अर्थों का अभिधान करने में प्रवृत्त होते हैं। अतः डित्थ आदि शब्दों का यदृच्छाशब्दत्व युक्तिसिद्ध होता है।

विशेष- यदृच्छा शब्द संज्ञा शब्द को कहते हैं। यह संज्ञा दो स्थितिओं में हो सकती है, (१) संज्ञा शब्द का अर्थ संज्ञी में विद्यमान न होने पर। जैसा कि- यदि किसी व्यक्ति के नेत्र (लोचन) रुग्ण हो और उनमें कमललोचनत्व धर्म न हो तब भी उसे कमललोचन कहेंगे,तो इसका आधार अर्थात्मक कमललोचन न होकर शब्दात्मक कमललोचनत्वरूप उपाधि ही होगी। यह शब्दात्मक उपाधि वर्णसमुदायरूप है। और इसी वर्णसमुदायरूप उपाधि को संज्ञी में सन्निवेश करते हैं; जिससे कमललोचन यह संज्ञा शब्द वर्णसमुदायरूप संज्ञी अर्थ का बोध कराता है। दूसरी स्थिति (२) संज्ञा शब्द का अर्थ संज्ञी में विद्यमान होने पर। जैसे कमललोचन यह एक संज्ञा है। वास्तव में संज्ञी के लोचन यदि कमल की तरह होने पर उसे कमललोचन कहेंगें तो वहाँ संज्ञा शब्द का अर्थ संज्ञी में विद्यमान होता है। इस में संज्ञी की उपाधि अर्थात्मक कमललोचन है। इस मत में वर्णसमुदाय नहीं माना जाता है। इस मत को उपस्थापित करने वालों का कहना है कि डित्थ

आदि संज्ञाशब्द उन उन संज्ञा को बताने के लिए ही प्रयुक्त होते हैं, न की संज्ञी को। संज्ञा शब्द (यदृच्छा शब्द) संज्ञारूप अर्थ का ही बोध कराता है, न कि संज्ञी रूप अर्थ का। क्योंकि इनका कहना है कि वर्णसमुदाय रूप संज्ञी का होना संभव नहीं; संज्ञी तो अर्थ रूप ही होता है। इस प्रकार इस स्थिति में यदृच्छा शब्द संज्ञा शब्द भी है और संज्ञामात्ररूप अर्थ भी है। इसमें शब्द केवल शब्दरूप अर्थ को ही बताता है। इस तरह प्रथम मत के अनुसार यदृच्छा शब्द संज्ञी को बतावें या द्वितीय मत के अनुसार संज्ञा को बतावें, दोनों ही स्थिति में यदृच्छा शब्द का अस्तित्व तो होता ही है। दोनों ही पक्ष यदृच्छा शब्द को संज्ञी का वाचक हो या संज्ञा का वाचक हो, दोनों ही पक्ष डित्थ आदि शब्दों का यदृच्छारूपत्व तो मानते ही हैं।

इस प्रकार व्याकरणशास्त्रानुसार वक्ता के यदृच्छास्वरूप जो उपाधि उसका व्याख्यान किया गया है।

यस्य तु इत्यादि। जो उपाधि वस्तु के धर्म के रूप में अवस्थित है वह भी दो प्रकार की है; सिद्ध उपाधि एवं साध्य उपाधि। जो साध्य उपाधि है वह क्रियारूप है, जैसे पचति (पकाता/ती है) इत्यादि। सिद्ध उपाधि दो प्रकार की है, जाति एवं गुण। जो पदार्थ का प्राणप्रद धर्म होता है वह सिद्ध उपाधि है, वह है जाति। कोई भी पदार्थ जातिसंबन्ध के बिना अपना स्वरूप को प्राप्त नहीं कर सकता है। जैसा कि वाक्यपदीय में कहा गया है- गाय अपने स्वरूप से ही गाय या गोभिन्न कोई अन्य पदार्थत्त्व को नहीं प्राप्त करता है; वह तो गोत्व जाति के संबन्ध से ही गोत्व को प्राप्त करता है। इस प्रकार जो उपाधि गाय को गोत्व स्वरूप दिलाता है वही पदार्थ का प्राणप्रद धर्मरूप उपाधि गोत्व आदि जाति है। गोत्व आदि जाति से स्वरूप को प्राप्त गाय आदि पदार्थ को जो अन्य गाय से भिन्न कराता है वह शुक्ल आदि गुण पदार्थ है। क्यों कि शुक्ल आदि गुण पट आदि वस्तु की स्वरूपप्राप्ति का कारण नहीं बन सकता है। पटत्वादि जाति के द्वारा ही पटादि वस्तु की स्वरूपप्राप्ति होती है। अतः पटत्वादि जाति द्वारा अपने स्वरूप को प्राप्त करने के पश्चात् शुक्ल आदि गुण उन में भेदाधान का कारण बनता है। जो भी नित्य परमाणुत्व आदि गुण पदार्थ हैं उन सभी के भी गुण जातीयत्व होने

से इस प्रकार भेदज्ञान के कारणस्वरूपवाले होते हैं। परमाणुपरिमाण, परममहत्परिमाण, परमह्रस्वपरिमाण, और परमदीर्घपरिमाण में से जो परमाणुपरिमाण है वह पृथिवी आदि नव द्रव्यों के सूक्ष्मतम अवयवों में अविभाज्यरूप में रहने से परमाणुरूप सूक्ष्मतम पदार्थ का प्राणप्रदत्त्व होने से उसे जाति एवं नित्य शब्द भी कहा जाता है। परन्तु वे नित्य परमाणुशब्द गुणजातीय हैं। जैसा कि इति रूप,रस,गन्ध, स्पर्श, संख्या, **परिमाण,** पृथक्त्व, संयोग, विभाग, परत्व, अपरत्व, गुरुत्व, द्रवत्व, स्नेह, शब्द, बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म, संस्कार आदि गुणों में **परिमाण** शब्द पढा गया है। अतः उन परमाणुशब्दों का भी इस प्रकार विशेषाधानहेतुत्व होने से गुणशब्दत्व सिद्ध होता है। इस प्रकार जो शब्द पदार्थ का प्राणप्रद धर्म है वह जातिशब्द है जैसे गोत्व आदि। स्वरूप को प्राप्त किये हुए वस्तु का जो भेद कारक धर्म है वह गुण शब्द है जैसे शुक्ल आदि।

## (मातृका)

{पूर्वपक्षोक्तं जातिमात्रस्य प्रवृत्तिनिमित्तत्वं}

**ननु सर्वेषामपि गुणक्रियायदृच्छाशब्दाभिमतानां जातिनिबन्धनत्वम्। तथा हि गुणशब्दानां तावच्छुक्लादीनां पयःशङ्खबलाकाद्याश्रयसमवेता ये शुक्लादिलक्षणा गुणा विभिन्नास्तत्समवेतसामान्यवाचिनः। एवं क्रियाशब्दानामपि गुडतिलतण्डुलादिद्रव्याश्रिता ये पाकादयोऽन्योन्यमन्यत्वेनावस्थिताः क्रियाविशेषाः, तत्समवेतं तासां सामान्यमेव वाच्यम्। यदृच्छाशब्दानान्तु डित्थादीनां शुकसारिकामनुष्याद्युदीरितेषु भिन्नेषु डित्थादिशब्देषु समवेतं डित्थशब्दत्वादिकं सामान्यमेव यथायोगं संज्ञिष्वध्यस्तमवसेयम्। यदि चोपचयापचययोगितया डित्थादौ संज्ञिनि प्रतिकालं भिद्यमानेष्वभिद्यमानो यन्महिम्ना डित्थो डित्थ इत्येवमादिरूपत्वेनाभिन्नाकारः प्रत्ययो बाधशून्यः संजायते तैः (तत्) तथाभूतं डित्थादिशब्दावसेयवस्तुसमवेतमेव**

**डित्थत्वादिसामान्यमेष्टव्यम्,तच्च डित्थादिशब्दैरभिधीयते। अतश्च गुणक्रियायदृच्छाशब्दानामपि जातिशब्दत्वाच्चतुष्टयी शब्दानां प्रवृत्तिर्नोपपद्यते।**

(सुबोधिनी)

तत्र जातावेव संकेतं स्वीकुर्वतां पूर्वपक्षाणां मतमुपस्थापयितुमाह **नन्विति**। गुणाश्च क्रियाश्च यदृच्छाश्च ते शब्दा गुणक्रियायदृच्छाशब्दास्तथात्वेनाभिमतानां स्वीकृतानां सर्वेषामपि शब्दानामित्यर्थः, जातिः गोत्वादिरूपा निबन्धनं कारणं येषां ते तेषां भावो जातिनिबन्धनत्वं जातिकारणत्वमित्यर्थः। सर्वेषां शब्दानां जातिमात्रप्रवृत्तिलभ्यत्वमुदाहरणमुखेन सप्रमाणं प्रदर्शयितुमाह **तथाही**ति। शुक्लादीनां गुणशब्दानां विशेषाधायकानामित्यर्थः,पयसो दुग्धस्य, शंखस्य कम्बोः (सामुद्रिकजन्तुविशेषस्य), बलाकादीनां तन्नामखगादीनामाश्रये ये शुक्लादिलक्षणाः शुक्लादयो लक्षणानि येषां ते, तादृशा ये गुणा विशेषाधायकधर्मा, विभिन्ना बहुप्रकारास्तेषु समवेतं विद्यमानं यत् सामान्यं जातिः, तद्वदन्तीति वाचिनः तद्वाचका इत्यर्थः, यद्यपि पयसः शुक्लत्वं भिन्नं शंखस्य शुक्लत्वं भिन्नं, बलाकादीनाञ्च शुक्लत्वं भिन्नं, तथापि भिन्नेष्वपि शुक्लत्वधर्मेषु शुक्लत्वसामान्यधर्मप्रयोगो भवति। अतः शुक्लादिविशेषाधानवाचकस्य गुणशब्दस्यापि जातिशब्दत्वम्। **एवमिति**। एवं पूर्ववत्, क्रियाशब्दानामपि पचति-पठति-गच्छत्यादीनामपि, गुडञ्च तिलञ्च तण्डुलादीनि च द्रव्याणि, तेषु आश्रितास्तन्निष्ठा ये पाकादयो धर्माः, अन्योऽन्यं परस्परम्, अन्यत्वेन भिन्नत्वेन, अवस्थिताः क्रियाविशेषाः पाकादिक्रियाविशेषाः, तत्समवेतं तेषु विद्यमानं, तासां क्रियाणां, सामान्यमेव जातिरेव, (प्रवृत्तिनिमित्तत्वेन) वाच्यं कथनीयम्। पूर्ववत् गुणशब्देष्वपि यथा जातिरेव प्रवृत्तिनिमित्तं तथैव यद्यपि गुडस्य पाके, तिलस्य पाके, तण्डुलादीनाञ्च पाके भिन्नता भवति तथापि तत्र सामान्यतया पाकक्रियाया एव प्रयोगो भवति। अत

एव पाकादिक्रियापदेष्वपि पाकत्वादिजातिरेव प्रवृत्तिनिमित्तमिति सारः। **यदृच्छाशब्दानामि**ति। डित्थादीनां तथात्वेन गृहीतानां यदृच्छाशब्दानां वक्तुरिच्छया गृहीतानां शब्दानां, शुकश्च सारिकाश्च मनुष्यादयश्च तैरुदीरितेषु तदुच्चारितेषु, डित्थादिवर्णसंघातेषु, समवेतं विद्यमानं, डित्थत्वादिकं, सामान्यमेव जातिरेव, यथायोगं यथासंबन्धं, संज्ञिषु पदार्थेषु, अध्यस्तं स्थापितमवसेयं ज्ञेयम्। शुकोच्चारिते, सारिकोच्चारिते, मनुष्याद्युच्चारिते च डित्थादिशब्दे भिन्नेऽपि, सर्वत्राऽपि येन कारणेन डित्थत्वादि सामान्यमेव गृह्यते। तत्राऽपि जातिरेव प्रवृत्तिनिमित्तमित्यवसेयमित्यर्थः। **यदि चे**ति। उपचयो वृद्धिः, अपचयो ह्रासः, ताभ्यां योगः संबन्धो यस्य तस्य भावस्ताया, वृद्धिह्राससंबन्धयुक्तत्वादित्यर्थः, डित्थादौ संज्ञिनि डित्थादौ पदार्थे, प्रतिकालं प्रतिक्षणं, भिद्यमानेषु, परिवर्त्यमानेषु, डित्थादिपदार्थेष्वित्यन्वयः, अभिद्यमानः, अपरिवर्त्यमानः समानाकारो वा, डित्थ डित्थ इत्येवमादिरूपत्वेनाभिन्नाकारः वयोवस्थाकारणादिभिर्भिन्नेष्वपि पदार्थेषु समानाकारं ज्ञानं व्यवहारो वा समानस्वरूपो, बाधशून्यो बाधरहितः, प्रत्ययः बुद्धिः, यन्महिम्ना यस्य सामान्यस्य जातेर्वा महिम्ना, प्रभावात्, संजायते भवति, तैः प्रत्ययैः, तथाभूतं तादृशं, डित्थादिशब्दैरवसेयं ज्ञेयं यद्वस्तु, तत्समवेतमेवाव्यभिचारेण समवायसंबन्धेन वा तद्युक्तमेव (अन्ययोगनिरासायात्रैवपदम्, अन्यच्च डित्थादिव्यतिरिक्तवस्त्वन्तरं), डित्थत्वादिसामान्यं डित्थत्वादिजातिः, एष्टव्यं ज्ञातव्यमवगन्तव्यं वा। तच्च डित्थादिवस्तुजातं डित्थादिशब्दैरभिधीयते तथात्वेन कथ्यते। अयमत्र सारः डित्थादिपदार्थेषु प्रतिक्षणं स्वाभाविकनियमेन वृद्धिह्रासौ भवतः, अधुना यद्वस्तु डित्थपदेनोच्यते, क्षणात्परं तद्वस्तुनि परिवर्तनं जायते। परिवर्तितेऽपि तस्मिन् वस्तुनि तदेवाभिन्नाकारः पूर्वप्रयुक्तः डित्थादिशब्दः प्रयुज्यते, तस्य च बाधोऽपि नैव जायते, एतादृशे

निर्बाधप्रयोगे भिन्नेऽपि समानाकारशब्दाभिधाने, जातिरेव कारणं, यथा बाले देवदत्ते यो यदृच्छाशब्दः प्रयुज्यते स एव यून्यपि वृद्धेऽपि, अतोऽत्र जातिरेव कारणम्। **अतश्चे**ति। अतश्च पूर्वोक्तात् कारणात्, गुणक्रियायदृच्छाशब्दानामपि जातिशब्दत्वात्, शब्दानां चतुष्टयी जातिगुणक्रियायदृच्छात्मिका, प्रवृत्तिर्व्यवहारो, नोपपद्यते न युज्यते। यथा सर्वेषु गवादिपिण्डेषु गोपदव्यवहारः, अनेकपदाश्रितेषु शुक्लादिगुणेषु च शुक्लत्वादिसामान्यपदप्रयोगः, गुडतण्डुलादिभिन्नवस्तूनां पाकेषु पचत्यादिसामान्यक्रियाप्रयोगः, शुकसारिकाप्रभृतिभिरुच्चरितेषु च प्रतिक्षणं भिद्यमानेष्वप्यभिन्नाकारो डित्थत्वादिसामान्यबोधो जायते, तस्माद् जातिरेव प्रवृत्तिनिमित्तं न तु महाभाष्यकारोक्ता जातिगुणक्रियायदृच्छारूपा चतुष्टयी शब्दानां प्रवृत्तिर्युक्तेति पूर्वपक्षमतसारः।

### (सङ्गमनी)

जातिमात्र ही सभी शब्दों के प्रवृत्तिनिमित्त है ऐसा पूर्वपक्षोक्त मत की उपस्थापना के लिए कहते हैं- **ननु सर्वेषामपि** इत्यादि। जातिमात्र को प्रवृत्तिनिमित्त माननेवालों का कहना है कि गुणशब्द, क्रियाशब्द एवं यदृच्छाशब्दों का भी जाति ही प्रवृत्ति का कारण है। क्यों कि शुक्ल आदि गुण शब्द दूध शंख बलाका (सारसपक्षी) आदि में समवाय संबन्ध से रहने वाले जो भिन्न भिन्न शुक्ल आदि गुण हैं, उन में समवायसंबन्ध से रहने वाले शुक्लत्व आदि जाति के वाचक हैं। इस प्रकार क्रिया शब्दों में भी गुड, तिल और चावल आदि द्रव्यों में आश्रित परस्पर भिन्न रूप में स्थित पाक आदि क्रियाविशेषों में समवाय संबन्ध से विद्यमान पाकत्व आदि जाति विशेष का ही बोध कराते हैं। डित्थ आदि यदृच्छा शब्दों के तोता, मैना और मनुष्य आदि द्वारा उच्चरित विविध डित्थ आदि शब्दों में रहनेवाले डित्थ शब्दत्वरूप एक सामान्य यदृच्छा-शब्द ही यथावसर भिन्न भिन्न डित्थ आदि शब्दों में विद्यमान है, अतः यदृच्छा-शब्दों में भी डित्थत्व आदि सामान्य डित्थ आदि का वाचक है। अथ च वृद्धि एवं क्षय के कारण प्रतिक्षण भिन्न भिन्न

डित्थ आदि संज्ञी में भी जिससे बाधारहित अभेद प्रतीति होती है, वह वस्तु डित्थ आदि शब्दों के वाच्य वस्तुओं में विद्यमान डित्थत्व आदि जाति ही है, और वही डित्थ आदि शब्दों से अभिहित होता है। अर्थात् डित्थ आदि संज्ञा से अभिहित पदार्थों में प्रतिक्षण वृद्धि या ह्रास होता रहता है। अभी जो वस्तु डित्थ पद से अभिहित हो रही है क्षण भर के पश्चात् उस वस्तु में परिवर्तन हो जाता है। परिवर्तित होते हुए भी उस वस्तु में वही पूर्व प्रयुक्त अभिन्नस्वरूप शब्द पुनः प्रयुक्त होता है। उस प्रकार के भिन्न वस्तुओं में भी अभिन्न शब्द के प्रयोग का कारण जाति ही है। जैसे बाल देवदत्त में जो यदृच्छा शब्द प्रयुक्त होता है, वही शब्द युवक देवदत्त में और वही शब्द वृद्ध देवदत्त में भी प्रयुक्त होता है। अतः यदृच्छा शब्दों का भी जाति ही प्रवृत्ति का कारण है। अतः गुणशब्द, क्रियाशब्द और यदृच्छा-शब्दों का भी जातिशब्दत्व होने से महाभाष्यकारोक्त शब्दों की चतुष्टयी प्रवृत्ति युक्तिसंगत प्रतीत नहीं होती है।

## (मातृका)

{जातिमात्रे प्रवृत्तिनिमित्तत्वं निरस्य जात्यादिपक्षस्थापनम्}

**अत्राभिधीयते - गुणक्रियाशब्दसंज्ञिव्यक्तीनामेव तत्तदुपाधिनिबन्धनभेदजुषामेकाकारतावगतिनिबन्धनत्वम्, न तु जातेरिति भगवतो महाभाष्यकारस्यात्राभिमतम्। यथा हि एकमेव मुखं तैलखड्गोदकादर्शादीनां प्रतिबिम्बावगतिनिबन्धनानां भेदान्नानाकारत्वेन प्रत्यवभासते तथैवैकैव शुक्लादिव्यक्तिर्देशकालावच्छिन्ना तत्तत्कारणसामग्र्युपजनित-शङ्खाद्याश्रयविशेषवशेन नानारूपतयाभिव्यक्तिमासादयन्ती विचित्रेव स्यादिति। अतश्च तस्याः शुक्लादिव्यक्तेरेकत्वाज्जातेश्च भिन्नाश्रयसमवेतत्वात् शुक्लत्वादिजात्यभावान्न शुक्लादिशब्दानां जातिशब्दत्वम्। एवं पचतीत्यादौ डित्थशब्दादौ डित्थादौ च संज्ञिनि वाच्यम्। अत्राप्येकस्या एव पाकादिक्रियाव्यक्तेः**

**डित्थादेश्च संज्ञिनो यथाक्रममभिव्यञ्जकानां पाकादीनां तथा ध्वनीनां वयोवस्थाविशेषाणां कौमारादीनां च यो भेदस्तद्वशेन नानाविधेन रूपेणावभासमानत्वात् स्थितमेतच्छब्दप्रवृत्ति-निमित्तानां शब्दार्थश्चतुर्विध इति।**

(सुबोधिनी)

सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमिति मन्यमानान् प्रत्युत्तरयितुं प्राह- **अत्राभिधीयत** इति। तत्तदुपाधिनिबन्धनभेदजुषां तेषां तेषां गुणक्रियाशब्दानां य उपाधयस्तन्निबन्धनं तत्कारणं तस्माद् भेदं जुषते सेवन्ते धारयन्ति ये तेषां, गुणक्रियाशब्दसंज्ञिव्यक्तीनामेव गुणशब्दाः क्रियाशब्दाश्च तेषां संज्ञिनः पदार्थास्तदाश्रिताश्च व्यक्तयो गवादयस्तेषामेव (एवकारोऽत्राऽन्ययोग-व्यवच्छेदरूपः, अन्या च जातिः), जातेर्व्यतिरिक्तत्वं साधयितुमाह व्यक्तीनामेवेति, एकाकारतावगतिनिबन्धनत्वं समानाकारप्रतीतौ कारणत्वं न तु जातेर्गोत्वादेरित्यर्थ इति भगवतो महाभाष्यकारस्यात्राभिमतम्। अत्रेदमाकूतं गुणशब्देषु क्रियाशब्देषु च या भेदप्रतीतिर्जायते तत्र तत्तदुपाधिसमाश्रितव्यक्तिभेदादेव जायते, न तु तत्र वास्तवेन भेदोऽस्ति। शंखेषु यच्छुक्लत्वं पयःसु च यच्छुक्लत्वं तत्समानमेव, तत्रोपाधिभूतशंखपयोरूपव्यक्तिरेव भेदप्रतीतौ कारणम्, न तु शुक्लादिगुणशब्देषु भेदः। तथैव गुडतण्डुलादीनां पाकेषूपाधिभूता गुडतण्डुलादयो व्यक्तय एव एकाकारताप्रतीतौ कारणमिति स्पष्टम्। तदेवोदाहरणमुखेन द्रढयितुमाह- **यथा हि एकमेवेति**। यथा हि उदाहरणतः एकमेव मुखम् एक एव मुखरूपः पदार्थविशेषः, प्रतिविम्बावगतौ, निबन्धनानि कारणानि तेषां तैलखड्गोदकादर्शादीना-माश्रयभूतानामुपाधीनां भेदाद्भिन्नरूपत्वात्, नानाकारत्वेन विभिन्नाकारत्वेन प्रत्यवभासते ज्ञायते, तथैकैव शुक्लादिव्यक्तिः एकमेवशुक्लादि वस्तु

पदार्थो वा, देशकालावच्छिन्ना देशकालादिधर्मैरवच्छिन्ना निरूपिता सती, तत्तत्कारणसामग्र्युपजनितशंखाद्याश्रयविशेषवशेन तानि तानि कारणानि उपादानभूतानि याः सामग्र्यः तदुपजनिताः तन्निर्मिताः शंखाद्याश्रयविशेषाः, तेषां वशेन, नानारूपतया, भिन्नरूपतया, अभिव्यक्तिमासादयन्ती प्रकाशं प्राप्नुवन्ती, विचित्रेव वैचित्र्ययुक्तावत्स्यात्। अयमर्थो यथैक एव मुखादिपदार्थः प्रतिबिम्बाश्रयभूततैलादिकारणवैभिन्न्यात् भिन्न इव परिलक्ष्यते, तथैव कारणभेदे कार्यभेद इति न्यायात् शंखादिकार्याश्रयभेदाः तत्तदुपादानकारणभेदनिमित्ताः इति शुक्लादिगुणेषु भेदप्रतीतिः, तत्तदुपाधिनिबन्धनैवेति स्पष्टम्। **अतश्चे**ति। अतः उपाधिनिबन्धनभेदत्वात् शुक्लादिव्यक्तेरेकत्वात् शंखादिभिन्नभिन्नवस्तुसमाश्रितशुक्लादिव्यक्तेरभिन्नत्वात्, जातेश्च भिन्नाश्रयसमवेतत्वात् भिन्नास्वपि व्यक्तिषु समवायसम्बन्धेन विद्यमानत्वात्, नित्यत्वे सत्यनेकसमवेतत्वं जातिरिति तल्लक्षणात्, शुक्लत्वादिजात्यभावात्, शुक्लत्वादिजातेरविद्यमानत्वात्, न शुक्लत्वादिशब्दानां जातिशब्दत्वमिति स्पष्टम्। **एवं पचती**ति। एवं पूर्वोक्तप्रकारेण पचतीत्यादौ यदृच्छाशब्दे, डित्थादौ संज्ञिनि पदार्थे च वाच्यमवगन्तव्यम्। **अत्रापी**ति। अत्रापि प्रकृतेऽपि, पचत्यादौ एकस्या एव पाकादिक्रियाव्यक्तेः, डित्थादियदृच्छाशब्दव्यक्तेः, डित्थादेश्च संज्ञिनः पदार्थस्य, यथाक्रममभिव्यञ्जकानां पाकादीनां क्रियास्थले भिन्नरूपत्वेनावभासमानानां, तथा ध्वनीनां शुकाद्युदीरितयदृच्छात्मकानां सार्थकानां निरर्थकानां वा ध्वनीनां, वयोवस्थाविशेषाणां कौमारादीनाञ्च यो भेदस्तद्वशेन तत्कारणात्, नानाविधेन रूपेण भिन्नप्रकारत्वेनावभासमानत्वात् स्थितमेतत् निश्चितमेत्, शब्दप्रवृत्तिनिमित्तानां शब्दानां प्रवृत्तौ यानि निमित्तानि कारणानि तेषां चतुष्ट्वात् चातुर्विध्यात् शब्दार्थश्चतुर्विधो जातिगुणक्रियायदृच्छारूप इति

स्पष्टम्।

(सङ्क्रमनी)

जातिमात्र में प्रवृत्ति पक्ष का खण्डन करते हुए कहते हैं- **अत्राभिधीयते** इति। जाति मात्र में प्रवृत्तिनिमित्त मानने वालों के प्रति महाभाष्यकार भगवान् पतञ्जलि का कहना है कि- गुणशब्दों एवं क्रियाशब्दों के अभीधेय व्यक्ति में परस्पर भेद होते हुए भी जो एकाकार प्रतीति होती है उसका हेतु गुण एवं क्रियारूप उपाधियों का होना है, जाति नहीं। जैसे एक ही मुख तेल, तलवार, जल और दर्पण आदि भिन्न भिन्न वस्तुओं में प्रतिविम्बित हो कर विभिन्न आकार में प्रतीत होता है, वैसे ही शुक्लत्व गुण, देश काल आदि से अवच्छिन्न उन उन कारणसामग्री से उत्पन्न शंख आदि आश्रयविशेष के कारण विविध रूप में अभिव्यक्त होता हुआ वैचित्र्य को प्राप्त करता है। अतः शुक्ल आदि व्यक्ति के एक होने से और जाति के अनेक व्यक्तिओं में समवाय संबन्ध से आश्रित होने से शुक्ल आदि शब्दों को जातिशब्द नहीं कहा जा सकता है। इस प्रकार पचति आदि क्रियाशब्दों में डित्थ आदि यदृच्छाशब्दों में एवं तदभिहित संज्ञिओं में भी जातिशब्दत्व का अभाव सिद्ध होता है। यहाँ भी एक ही पाक आदि क्रिया में तथा डित्थ आदि शब्द एवं अर्थों के अभिव्यंजक पाक आदि क्रियाओं, डित्थ आदि ध्वनिओं तथा आयुःस्थितिविशेष कौमार्य, यौवन आदि अवस्था विशेष के कारण जो भेद हैं, उसके कारण वे भिन्न भिन्न रूप में प्रतीत होते हैं। अतः यह सिद्ध होता है कि शब्दों के प्रवृत्तिनिमित्तों के चार प्रकार के होने से शब्दों के अर्थ भी चार प्रकार हैं।

(मातृका)

{लाक्षणिकाभिधाव्यापारः}

**अधुना लाक्षणिकस्य द्विभेदत्वमुपदर्शयितुमाह-**

**शुद्धोपचारमिश्रत्वाल्लक्षणा द्विविधा मता ।। २।।**

**लक्षणाया द्विप्रकारत्वं शुद्धत्वादुपचारमिश्रत्वाच्च। शुद्धा तावल्लक्षणा 'गङ्गायां घोष' इति। अत्र हि घोषं प्रति**

**स्रोतोविशेषस्याधारता नोपपद्यते इति गङ्गाशब्दः स्वाभिधेयस्य स्रोतोविशेषस्य यः समीपभूतस्तटः, तं लक्षणयावगमयति। उपचारमिश्रा तु यत्र वस्त्वन्तरं वस्त्वन्तरे उपचर्यते, यथा 'गौर्वाहीक' इति। अत्र हि गोशब्दो वाहीकशब्देनानुपपद्यमान-सामानाधिकरण्याद् बाधितमुख्यार्थः सन् गोगता ये जाड्यमान्द्यादयो गुणाः, तत्सदृशवाहीकगतजाड्यमान्द्यादि-गुणलक्षणद्वारेण गोगतजाड्यमान्द्यादिगुणसदृश-जाड्यमान्द्यादिगुणोपेते वाहीक उपचरितः। तेनेयमुपचारमिश्रा लक्षणा। एवं शुद्धोपचारमिश्रत्वेन लक्षणायां द्वैविध्यमुक्तम्।**

## (सुबोधिनी)

लाक्षणिकाभिधाव्यापारस्य भेदोपदर्शनायोपक्रमत **अधुनेति**। अधुना संप्रति, लाक्षणिकस्य लक्षणाभिधस्याभिधाव्यापारस्य, द्विभेदत्वं द्विप्रकारत्वमुपदर्शयितुं लक्षणोदाहरणमुखेन योजयितुमाहोवोचत् **शुद्धोपचारेति**। शुद्धा चोपचारमिश्रा चेति शुद्धोपचारमिश्रे तयोर्भाव; शुद्धोपचारमिश्रत्वं तस्मात् लक्षणा तदाख्याभिधाशक्तिः द्विविधा द्विप्रकारा ज्ञेया। तदेव वृत्तावप्याह- **लक्षणाया** इति। लक्षणायाः शूद्धालक्षणा उपचारमिश्रालक्षणा चेति द्विधात्वमाह। शुद्धालक्षणाया उदाहरणं प्राह- **शुद्धेति**। शुद्धोपचारमिश्रा लक्षणा गङ्गायां गङ्गाप्रवाहे घोष आभीरपल्लीवेशेष इति। शुद्धोदाहरणं लक्षणेन सह संगमयितुं प्राह- **अत्रेति**। अत्र 'गंगायां घोष' इत्यस्मिन्नुदाहरणे घोषं प्रति आभीरपल्लीं प्रति, स्रोतोविशेषस्य प्रवाहविशेषस्य यः समीपभूतस्तटः सामीप्यसंबन्धसंबद्धं तीरं, तं तटं, लक्षणया लाक्षणिकेनाभिधाव्यापारेण, अवगमयति बोधयति। द्वितीयामुपचारमिश्रां लक्षणामुदाहर्तुमाह- **उपचारमिश्रेति**। उपचारो नामात्यन्तं विशकलितयोः पदार्थयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनात्मक आरोपः, तेन मिश्रा, तु इत्यनेन शुद्धाया

व्यतिरिक्तत्वं लक्ष्यते, यत्र लक्ष्ये, वस्त्वन्तरं भिन्नं वस्तु, वस्त्वन्तरे भिन्ने वस्तुनि, उपचर्यते अभिन्नेवारोप्यते, यथा गौः गोपिण्डविशेषः, वाहीकः व्यक्तिविशेषः। लक्ष्यं लक्षणेन सह संगमयितुमाह **अत्रेति**। अत्र 'गौर्वाहीक' इत्यत्र गोशब्दः गोपिण्डप्रतिपादकः शब्दः, वाहीकशब्देन वाहीकार्थप्रतिपादकेन शब्देन, अनुपपद्यमानम् उपपादनयोग्याभावं समानाधिकरणम् एकाधिकरणं येन तस्मात् अनुपपद्यमानसामानाधिकरण्यात्, बाधितमुख्यार्थः बाधितोऽसंगतो मुख्यार्थो वाच्यार्थो यस्य सः, सन् भवन्, गोगता गोपिण्डसहचारिणो ये जाड्यमान्द्यादयो गुणा जडत्वमन्दत्वादयो गुणाः, तत्सदृशास्तत्समाः, ये वाहीकगता आरोप्यमाणवस्तुवाहीकगता जाड्यमान्द्यादिगुणास्तेषु लक्षणद्वारेण लक्षणया प्रतिपादनमाध्यमेन गोगतजाड्यमान्द्यादिगुणैः सदृशास्तत्समा ये जाड्यमान्द्यादिगुणास्तैरुपेते तद्युक्ते वाहीके लक्ष्ये व्यक्तिविशेष उपचरितोऽभेदत्वेन प्रतीतः। तेन तादृशोपचारयुक्तत्वात् इयमुपचारमिश्रा लक्षणेत्युच्यते। एवमुपर्युक्तप्रकारेण शुद्धया सहोपचारमिश्रत्वं तदेव भेदस्तेन शुद्धात्वेनोपचारमिश्रात्वेनेति द्विधा लक्षणायां लाक्षणिकाभिधाव्यापारे द्वैविध्यं द्विप्रकारत्वमुक्तं प्रतिपादितम्।

अत्रायं सारो यल्लक्षणा शुद्धात्वेनोपचारमिश्रात्वेन च प्रथमं द्विधा। उपचारश्चारोपः तेन मिश्रा उपचारमिश्रा। यथा 'गौर्वाहीक' इत्यत्र गोत्वं वाहीकत्वञ्च परस्परं सर्वथा भिन्नमथ चोभयोर्जाड्यत्वमान्द्यत्वादिसादृश्यधर्मयुक्तत्वात् परस्परं भेदप्रतीतिस्थगनं जायते तेन च वाहीके गोत्वमारोप्यते। एवं गोगतवाहीकगतधर्मयोः साजात्यादैकाधिकरण्येन प्रयोगः संगच्छते। 'गंगायां घोष' इत्यत्र च तादृशाभेदात्मकारोपाभावाद गङ्गाप्रवाहतत्तटयोःभेदरूपसामीप्यसंबन्धाद आरोपाभावाच्च शुद्धात्वमिति। वक्ष्यते च -तटस्थे लक्षणा शुद्धा स्यादारोपस्त्वदूरगे। (अभिधावृत्तिमातृका,५) इत्यत्र।

## (सङ्क्रमनी)

लाक्षणिक अभिधाव्यापार के भेद बताते हैं- **अधुना लाक्षणिकस्य** इत्यादि द्वारा। अभी लाक्षणिक अभिधाव्यापार के द्विप्रकारत्त्व को (दो भेदों को) बतलाने हेतु कहते हैं-

**(कारिका)** शुद्धा एवं उपचारमिश्रा के रूप में लक्षणा दो प्रकार की होती है।

वृत्ति में उदाहरण के साथ स्पष्ट करने के लिए कहते हैं- **लक्षणाया: द्विप्रकारत्त्वम्** इत्यादि। लक्षणा शुद्धा एवं उपचारमिश्रा के रूप में दो प्रकार की होती है। शुद्धा लक्षणा का उदाहरण 'गंगायां घोष:' है जिस का अर्थ है गङ्गाप्रवाह में घोष अर्थात् पल्लीविशेष है। यहाँ घोष का आधार नदी का प्रवाह नहीं बन सकता है। अत: गङ्गा शब्द का वाच्यार्थ जो प्रवाहविशेष है उसके निकट विद्यमान तट लक्षणा के द्वारा प्रतीत होता है। उपचारमिश्रा वहाँ है जहाँ एक वस्तु में उस से भिन्न वस्तु अभिन्न के रूप में आरोपित होता है। जैसे 'गौर्वाहीक' है, अर्थात् गाय ही बाहीक (बलुचीस्तानी व्यक्ति) है। यहाँ गोपद एवं वाहीकपद दोनों का सामानाधिकरण्य सम्भव नहीं हो पाने से मुख्यार्थ बाधित हो कर गाय में रहने वाले जडता और मन्दता आदि गुणों के सदृश वाहीक (बलुचीस्तानी व्यक्ति) में विद्यमान जडता और मन्दता आदि गुणों को लक्षणाद्वारा बताते हुए गाय में विद्यमान जडता और मन्दता आदि गुणों के सदृश जडता और मन्दता आदि गुणों से युक्त वाहीक में गोशब्द आरोपित होता है। उससे यह उपचारमिश्रा लक्षणा कही जाती है। इस प्रकार शुद्धा एवं उपचारमिश्रा लक्षणा के रूप में लक्षणा के दो भेद बताए गये हैं।

यहाँ यह सार है कि लक्षणा शुद्धा एवं उपचार मिश्रा के रूप में दो प्रकार की है। उपचार का अर्थ आरोप और उससे मिश्र होने से उपचारमिश्रा अर्थात् आरोप से मिश्रित। जैसे 'गौर्वाहीक:' है। यहाँ गाय और वाहीक (बलुचिस्तानी) व्यक्ति एक दूसरे से अत्यन्त भिन्न है। परन्तु दोनों में विद्यमान जडता और मन्दता आदि सादृश्य गुणों के द्वारा भेदप्रतीति स्थगित

हो जाती है और वाहीक में गोत्व का आरोप होता है। इस प्रकार गाय एवं वाहीक के धर्मों की समानता के आधार पर दो भिन्न वस्तुओं का एकाधिकरण में प्रयोग सिद्ध हो जाता है। शुद्धा के उदाहरण 'गंगायां घोषः' में उस प्रकार अभेदात्मक आरोप न रहने से गङ्गा एवं उसके तट में भेद रूप तटस्थता से और तादृश आरोप के अभाव से शुद्धा लक्षणा है। आगे भी ग्रन्थकार यह प्रतिपादित करेंगे- तटस्थे लक्षणा शुद्धा स्यादारोपस्त्वदूरगे इत्यादि।

(मातृका)

{शुद्धाभेदौ}

**इदानीं तु शुद्धाया अपि लक्षणाया द्वैविध्यं दर्शयति-**

**उपादानाल्लक्षणाच्च शुद्धा सा द्विविधोदिता।**

**येयं लक्षणा शुद्धा प्रतिपादिता सा द्विविधोक्ता। क्वचित्खल्वर्थान्तरोपादानेन लक्षणा प्रवर्तते, क्वचित्तु अर्थान्तरलक्षणेन। किं पुनरर्थान्तरस्योपादानं किं वा तस्य लक्षणमित्याशङ्क्याह-**

**स्वसिद्ध्यर्थतयाक्षेपो यत्र वस्त्वन्तरस्य तत्।।३।।**

**उपादानं, लक्षणं तु तद्विपर्यासतो मतम्।**

**यत्र स्वसिद्ध्यर्थतया वस्त्वन्तरस्याक्षेपो भवति तत्रोपादानं, यथा 'गौरनुबन्ध्य' इति। अत्र हि गोत्वस्य यागं प्रति साधनत्वं शाब्दं व्यक्त्याक्षेपमन्तरेण नोपपद्यत इति तत्सिद्ध्यर्थतया व्यक्तेराक्षेपः। यथा च 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति। अत्र हि पीनत्वं दिनाधिकरणभोजनाभावविशिष्टतयावगम्यमानमेव कार्यत्वात् स्वसिद्ध्यर्थत्वेन कारणभूतं रात्रिभोजनमाक्षेपादाभ्यन्तरीकरोति। न हि पीनत्वस्य रसायनाद्युपयोगजन्यता, प्रमाणान्तरेण तदभावावसाये सत्येतस्योदाहरणत्वात्। पीनत्वस्य चात्र दिनाधिकरणकभोजनाभावविशिष्टत्वेन रासायनाद्युपयोग-**

बाधहेतुत्वात्। अत्र च रात्रौ भुङ्क्त इत्येतच्छब्दाक्षेपपूर्वकतया प्रमाणस्यापरिपूरणस्य परिपूरणात् श्रुतार्थापत्तित्वं भवतु अथवा कारणस्यैव रात्रिभोजनस्याक्षेप इति सर्वथा स्वसिद्ध्यर्थत्वेनार्थान्तरस्याक्षेपपूर्वकतयाऽन्तर्भावनादुपादानत्वमुपपद्यते।

यत्र तु पूर्वोदितोपादानरूपविपर्यासंश्रयान्न स्वार्थसिद्ध्यर्थतयाऽर्थान्तरस्याक्षेपः, अपि त्वर्थान्तरसिद्ध्यर्थत्वेन स्वार्थसमर्पणम्, तत्र लक्षणम्, यथा पूर्वमुदाहृतं 'गङ्गायां घोष' इति। अत्र हि तटस्य घोषाधारतया धारणक्रियान्वितस्य गङ्गाशब्देन स्वसमर्पणं क्रियते। अतोऽर्थान्तरभूतं तटमवगमयितुं गङ्गाशब्देन स्ववाच्यभूतः स्रोतोविशेषोऽत्र समर्प्यते इत्यर्थान्तरसिद्ध्यर्थत्वेन स्वार्थसमर्पणम्। एवं चात्र पूर्वोदितोपादानरूपविपर्यासाल्लक्षणत्वम्। एवं शुद्धा लक्षणा द्विविधा प्रविभक्ता।

## (सुबोधिनी)

शुद्धालक्षणाया भेदोपदर्शनायोपक्रमते- **इदानीमिति**। स्पष्टम्। उपादानाल्लक्षणाच्चेत्यादि। सा पूर्वमुक्ता शुद्धा उपचाररहिता, उपादानाल्लक्षणाच्च उपादानलक्षणात्वेन लक्षणलक्षणात्वेन च द्विविधा द्विप्रकारा, उदिता कथिता। तदेव विवृणुते- **येयमित्यादि**। येयं लक्षणा शुद्धा प्रतिपादिता शुद्धात्वेन लक्षणाया यो भेदः प्रतिपादितः, सा असौ, द्विविधोक्ता! द्विप्रकारत्वेन वर्णिता। तत्रोपादानलक्षणाया लक्षणलक्षणायाश्च क्षेत्रं प्रदर्शयितुमाह- **क्वचित्त्वित्यादि**। क्वचित् कुत्रचित्, खलु वाक्यालङ्कारे, अर्थान्तरोपादानेन अर्थान्तरस्य स्वार्थपरित्यागपूर्वकं ग्रहणेन, क्वचित्त्वन्यत्रार्थान्तरलक्षणेन स्वार्थपरित्यागपूर्वकमर्थान्तरे परिणामेन। अर्थान्तरोपादानस्यार्थान्तरलक्षणस्य च स्वरूपजिज्ञासां प्रक्रमते- **किं पुनरित्यादि**। स्पष्टम्। **स्वसिद्ध्यर्थतयेति**। यत्र लक्षणायां

स्वस्य वाच्यार्थस्य मुख्यार्थस्य वा सिद्ध्यर्थतया सिद्धेः संपादनस्यार्थता प्रयोजनता तया स्वार्थसिद्ध्यर्थमिति, वस्वन्तरस्य वाच्यार्थभिन्नस्याक्षेपः, तत् उपादानं नामोपादानलक्षणेति। तद्विपर्यासतः अन्यसिद्ध्यर्थं स्वार्थस्याक्षेपे परित्यागे वा लक्षणं मतं लक्षणलक्षणा स्वीकृता। कारिकां विवृणुते- **यत्र स्वसिद्ध्यर्थतये**ति। यत्र शुद्धालक्षणायां स्वसिद्ध्यर्थतया वाच्यार्थोपादानार्थं, वस्त्वन्तरस्याक्षेपो भवति अर्थान्तरस्याक्षेपो जायते, तत्रोपादानम्, यथा 'गौरनुबन्ध्य' इति। अत्र हि 'गौरनुबन्ध्य' इत्यत्र, गोत्वस्य गोत्वजातेः, यागं प्रति यज्ञकर्म प्रति, साधनत्वमुपायत्वं, शाब्दं शब्दबोध्यं, व्यक्त्याक्षेपमन्तरेण गोव्यक्तेराक्षेपं विना नोपपद्यते न युज्यत इति, तत्सिद्ध्यर्थतया गोत्वस्य यज्ञसाधनत्वेन सिद्ध्यर्थं, व्यक्तेराक्षेपः गोव्यक्तेराक्षेपो लक्षणया बोधो जायते। उदाहरणान्तरं प्रस्तौति- **यथा चे**ति। यथा चोदाहरणान्तरं 'पीनो देवदत्तो दिवा न भुंक्ते' देवदत्ताख्यः कश्चित् पीनः स्थूलः, दिवा दिवसे, न खादतीति। अत्र ह्युदाहरणे, पीनत्वं स्थूलत्वं, दिनाधिकरणभोजनाभावविशिष्टतया दिवसे क्रियमाणभोजनाभावेन विशिष्टत्वेनावगम्यमानं दिवाभोजनाभावविशिष्टत्वेन बोध्यमानमिति कार्यत्वात् प्रतिपाद्यत्वात्, स्वसिद्ध्यर्थत्वेन आत्मनः सिद्ध्यर्थं, कारणभूतं प्रतिपादकभूतं रात्रिभोजनम्, आक्षेपात् लक्षणया आभ्यन्तरीकरोति आक्षेपपूर्वकं लक्षणया गोचरीकरोति गतार्थयति वा। अयमर्थः पीनत्वस्य कारणं हि भोजनं, दिवाभोजनाभावविशिष्टपीनत्वस्य च करणं रात्रिभोजनमिति लक्षणयावगम्यत इति। ननु पीनत्वं रसायनाद्युपयोगजन्यत्वमित्यन्यथासिद्धमिति शंकां परिहर्तुमाह- **न हि पीनत्वस्ये**त्यादि। रसायनाद्युपयोगाज्जायत इति रसायनाद्युपयोगजन्यं तस्य भावः। पीनत्वमत्र न रसायनस्य (Chemical) औषधिविशेषस्योपयोगजन्यम्। प्रमाणान्तरेण भिन्नप्रमाणेन तदभावावसाये सति रसायनाद्युपयोगजन्यत्वाभावनिश्चये सति, एतस्य 'पीनो देवदत्तो

दिवा न भुंक्ते' इत्यस्य वाक्यस्योदाहरणत्वादुदाहरणत्वेन प्रस्तुतत्वात्। पीनत्वं हि रसायनाद्युपयोगादपि संभवतीति कृत्वा न भोजनमात्रं करणम्। परं प्रमाणान्तरेण रसायनाद्युपयोगजन्यत्वाभावे निश्चिते सत्येव दिवाभोजनाभावविशिष्टपीनत्वं रात्रिभोजनादेव सिद्ध्यतीति ज्ञायते। पीनत्वं कार्यं द्विधा संभवति- भोजनाद्रसायनाद्युपयोगाच्च। परं दिवाभोजनाभावविशिष्टपीनत्वरूपं कार्यं रसायनाद्युपयोगरूपबाधहेतोः सिद्ध्यति। यदि सर्वथा भोजनाभावविशिष्टं पीनत्वं विवक्षितं स्यात् तदा रसायनाद्युपयोगस्य हेतुत्वमुपपद्येत। परं भोजनाभावस्य दिनाधिकरणत्वमेव वर्तत इति, रात्रिभोजनञ्च नैव निराकृतमिति, रसायनाद्युपयोगस्य बाधहेतुत्वम्। तेनैव च 'पीनो देवदत्तो दिवा न भुंक्ते' इति वाक्यमुपादानलक्षणाया उदाहरणयोग्यं भवति। अत एवोक्तं पीनत्वस्य चात्र दिनाधिकरणभोजनाभावविशिष्टत्वेन रसायनाद्युपयोगबाध-हेतुत्वात्। यदि दिवाभोजनमपि नैव निराकृतं स्यात् तदा रसायनाद्युपयोगस्य कारणत्वेन स्वीकारः स्यात्। परं रसायनाद्युपयोगाभावरूपकारणस्यानुपादानादत्र पीनत्वरूपस्वार्थसिद्ध्यर्थं रात्रिभोजनस्याक्षेप इत्युपादानलक्षणेति प्रतिपादयितुमाह- **अत्र च रात्रौ भुंक्ते** इत्यादि। अत्र च 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यादौ, अपरिपूरणस्य प्रमाणस्य शब्दतोऽकथितस्य रसायनाद्युपयोगाभावरूपकारणस्य 'रात्रौ भुंक्ते' इत्येतच्छब्दाक्षेपपूर्वकतया परिपूरणात् आकांक्षायाः शमनात् श्रुतार्थापत्तित्वं[६] भवतु स्यात्, अथवा स्वसिद्ध्यर्थत्वेन पीनत्वरूपवाच्यार्थसिद्धये कारणस्य पीनत्वकार्यनिरूपितकारणस्य

---

६. उपपाद्यस्य श्रुतार्थस्य ज्ञानेन उपपादकस्यार्थान्तरस्य कल्पना यत्र भवति सा अर्थापत्तिः श्रुतार्थापत्तिर्वा। तदुक्तं श्लोकवार्तिके -

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत्।
अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता।।

रात्रिभोजनस्यैवाक्षेपो लक्षणया बोध इति वाक्यार्थेऽर्थान्तरस्यान्तर्भावादुपादानलक्षणात्वमुपपद्यत इति।

लक्षणलक्षणामुदाहर्तुमाह- **यत्र तु पूर्वोदितोपादानरूपे**त्यादि। यत्र तु व्यतिरेकोदाहरणस्थले, पूर्वोदितस्य पूर्वप्रकाशितस्य उपादानरूपस्य स्वार्थसिद्ध्यर्थतयाऽन्यार्थाक्षेपस्य विपर्यासंश्रयात् वैपरीत्याश्रयात्, स्वार्थसिद्ध्यर्थतया वाच्यार्थसिद्ध्यर्थत्वेनाऽर्थान्तरस्याक्षेपो न, अपि तु परन्तु अर्थान्तरसिद्ध्यर्थत्वेन वाच्यभिन्नार्थान्तरसिद्ध्यर्थं स्वार्थसमर्पणं तत्र लक्षणं लक्षणलक्षणेति, यथा पूर्वमुदाहृतं 'गङ्गायां घोष' इति गङ्गाप्रवाहे आभीरपल्लीविशेष इत्यर्थः। **अत्रे**ति। अत्र 'गङ्गायां घोष' इत्यत्र, गङ्गायाः घोषाधारत्वेनासंभवात् मुख्यार्थस्यानुपपन्नत्वाच्च धारणक्रियान्वितस्याऽऽधारत्वेनविवक्षितस्य तटस्य घोषाधारतया घोषस्याधारत्वेन गङ्गाशब्देन स्वसमर्पणं प्रवाहरूपवाच्यार्थत्यागः क्रियते। अत एतस्मात् कारणात् तटमवगमयितुं तटरूपार्थान्तरं बोधयितुं गङ्गाशब्देन गङ्गाप्रवाहवाचकेन स्ववाच्यभूतः गङ्गाशब्दस्य मुख्यार्थभूतः, स्रोतोविशेषः प्रवाहविशेषः, अत्र समर्प्यते परित्यज्यते, इत्यर्थान्तरसिद्ध्यर्थत्वेन तटरूपार्थान्तरं साधयितुं, स्वार्थसमर्पणं गङ्गाशब्दस्य प्रवाहरूपस्वार्थस्य परित्यागो भवतीत्यर्थः। एवं चात्र 'गङ्गायां घोष' इत्यत्र, पूर्वोदितोपादानरूपस्य पूर्वकथिताया उपादानलक्षणायाः विपर्यासात् वैपरीत्यात्, लक्षणत्वं लक्षणलक्षणात्वमिति।

अत्रेदमवगन्तव्यं उपचाराभावे शुद्धालक्षणा। उपचारश्चारोपः। एवमारोपाभावे सति शुद्धा। सा चोपादानलक्षणालक्षणलक्षणात्वेन द्विविधा। उपादानं नाम ग्रहणम्। लक्षणं नाम परित्यागः। यत्र स्वार्थसिद्ध्यर्थमन्यार्थस्य ग्रहणं तत्रोपादानलक्षणा, यथा- 'गौरनुबन्ध्य' इत्यत्र गोत्वजातेरनुबन्धनस्यासंभवात् तत्सिद्ध्यर्थं गोव्यक्तिविशेषरूपस्यार्थान्तरस्योपादानं ग्रहणमित्युपादानलक्षणा। यथा

वा 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र दिवाभोजनाभावविशिष्टस्य पीनत्वस्य सिद्ध्यर्थं रात्रिभोजनरूपस्यार्थान्तरस्य ग्रहणमिति। यत्र चान्यार्थसिद्ध्यर्थं स्वार्थस्य लक्षणं परित्यागस्तत्र लक्षणलक्षणा। यथा - 'गङ्गायां घोष' इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाप्रवाहरूपमुख्यार्थस्य परित्यागो नाम लक्षणमिति लक्षणलक्षणा।

(सङ्गमनी)

शुद्धालक्षणा के दोनों भेद बतलाने के लिए कहते हैं- **इदानीं तु** इत्यादि। अभी शुद्धा लक्षणा के भी दो भेदों को दिखाते हैं।

**(कारिका)** उपादानलक्षणा एवं लक्षणलक्षणा के रूप में शुद्धा लक्षणा दो प्रकार की होती है।

वृत्ति में कहते हैं कि जो शुद्धा लक्षणा बताई गई है वह उपादानलक्षणा एवं लक्षणलक्षणा के रूप में दो प्रकार की है। कहीं पर अन्य अर्थ के ग्रहण से लक्षणा होती है और कहीं पर अन्य अर्थ के त्याग से। अन्य अर्थ का ग्रहण और अन्य अर्थ का त्याग क्या है और कैसे है यह निम्न कारिका में बताते हैं-

(कारिका) जहाँ अपनी सिद्धि के लिए अन्य वस्तु का आक्षेप (ग्रहण) होता है वहाँ उपादानलक्षणा है। इस के विपरीत होने से अर्थात् जहाँ अन्य की सिद्धि के लिए स्वार्थ का त्याग होता है वहाँ लक्षणलक्षणा है।

वृत्ति में उदाहरण के साथ कहते हैं- जहाँ स्वार्थसिद्धि के लिए परार्थ का आक्षेप होता है वहाँ उपादानलक्षणा होती है, जैसे- 'गौरनुबन्ध्यः' यहाँ। यहाँ यज्ञ के प्रति गोत्वजाति का साधनत्वरूप शब्दार्थ गोव्यक्ति के आक्षेप के बिना संगत नहीं होता है। अतः गोत्वजातिरूपक स्वार्थ की सिद्धि के लिए गोव्यक्ति का आक्षेप होता है। अथवा 'पीनो देवदत्तो दिवा न भुंक्ते' (देवदत्त मोटा है जो दिन में भोजन नहीं करता है) यहाँ पर भी। इस वाक्य में पीनत्व (स्थूलत्व) कार्य है जिस अर्थ की प्रतीति दिन में किए जाने वाले भोजन के अभावरूप विशेषता के साथ हो रही है। परन्तु पीनत्वरूप कार्य का कारण भोजन है, जो कि दिवा भोजन के अभाव के द्वारा प्रतिपादित

है। अतः पीनत्व कार्य अपनी संगति के लिए कारणभूत रात्रभोजन का आक्षेप करके उसकी प्रतीति कराता है। यह पीनत्व रसायन आदि के प्रयोग से उत्पन्न नहीं है, क्यों कि प्रमाणान्तर से रसायन के प्रयोग का अभाव विदित होने पर ही 'पीनो देवदत्तो दिवा न भुंक्ते' इस वाक्य को उपादानलक्षणा का उदाहरण बनाया जा सकता है। पीनत्व कार्य दो कारणों से हो सकता है- भोजन से और रसायन के उपयोग से। परन्तु दिन में भोजन के अभावरूप विशेषण से विशिष्ट पीनत्व रूप कार्य, रसायन आदि के उपयोगरूप बाधहेतु से ही सिद्ध होता है। यदि भोजन का अत्यन्ताभावविशिष्ट पीनत्व विवक्षित होता तो रसायन आदि के उपयोग को कारण के रूप में माना जा सकता था। परन्तु भोजनाभाव का दिनाधिकरणत्व को ही निषिद्ध किया गया है, न कि रात्र्यधिकरणत्व को भी। अतः रसायन आदि के उपयोग को बाधहेतु के रूप में माना जा सकता है। यदि भोजनाभाव का दिनाधिकरणत्व भी निषिद्ध न होता तो रसायन आदि के उपयोग को हेतु के रूप में माना जा सकता था। किन्तु इस वाक्य में प्रतिपादित देवदत्त का पीनत्व दिन में किये जाने वाले भोजन के अभाव से युक्त तथा रसायन आदि के प्रयोग को बाधित करनेवाले ज्ञान से युक्त कारणविशेष का कार्य है। किन्तु उस कारण का कथन इस वाक्य में नहीं हुआ है, अतः यह प्रमाणवाक्य अपूर्ण है। इस अपूर्ण वाक्य को 'रात्रौ भुंक्ते' (रात में खाता है) इस वाक्यांश का आक्षेप करके पूर्ण बनाया जाता है। इस प्रकार यहाँ श्रुतार्थापत्ति हो सकती है। जहाँ उपपाद्य श्रुतार्थ के ज्ञान से उपपादक अर्थान्तर की कल्पना होती है वह श्रुतार्थापत्ति है। यहाँ उपपाद्य दिवा भोजनाभावविशिष्ट पीनत्वरूप कार्य उपपाद्य श्रुतार्थ है जिस के ज्ञान से उपपादक रात्रिभोजन की कल्पना होती है। अथवा पीनत्वरूप कार्य के कारणभूत रात्रिभोजन का ही आक्षेप होने से पीनत्व रूप वाक्यार्थ की सिद्धि के लिए अर्थान्तर के आक्षेप द्वारा यहाँ वाक्यार्थ में अन्य अर्थ का अन्तर्भाव किया जाता है। अतः यहाँ उपादानलक्षणा सिद्ध होती है।

लक्षणलक्षणा को उदाहरणमुख से दिखलाने हेतु कहते हैं- **यत्र तु** इत्यादि। जहाँ तो पूर्व कथित उपादानलक्षणा के विपरीत के आश्रय से स्वार्थ सिद्धि के लिए अर्थान्तर का आक्षेप नहीं होता है अपि तु परार्थ की सिद्धि के लिए स्वार्थ का परित्याग होता है, वहाँ लक्षणलक्षणा, जैसे कि- 'गङ्गायां घोषः' यहाँ पर। यहाँ गङ्गाप्रवाह घोष या पल्लीविशेष का आधार नहीं बन सकता है, वस्तुतः तट ही घोष का आधार बन सकता है, इसीलिए मुख्यार्थ के बाधित हो जाने पर आधार के रूप में विवक्षित तट के प्रति गङ्गापद स्वार्थ को समर्पित कर देता है। अतः अर्थान्तरभूत तट को बताने के लिए गङ्गा शब्द ने अपने प्रवाहविशेषरूप वाच्यार्थ का समर्पण कर दिया है। इस प्रकार यहाँ अर्थान्तर की सिद्धि के लिए स्वार्थ का समर्पण है। इस प्रकार यहाँ पूर्व कथित उपादानलक्षणा के उलटा होने से लक्षणलक्षणा है। इस प्रकार शुद्धा लक्षणा दो प्रकार की कही गई है।

## (मातृका)

### {उपचारमिश्रायाश्चतुर्विधत्वम्}

**इदानीमुपचारमिश्रां चतुर्भेदत्वेन निरूपयितुमाह-**

**आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः।।४।।**
**प्रत्येकं भिद्यमानत्वादुपचारश्चतुर्विधः।**

**द्विविधः उपचारः शुद्धो गौणश्च। तत्र शुद्धो यत्र मूलभूतस्योपमानोपमेयभावस्याभावेनोपमानगतगुणसदृशगुणयोगलक्षणाऽसंभवात् कार्यकारणभावादिसंबन्धाल्लक्षणया वस्त्वन्तरे वस्त्वन्तरमुपचर्यते, यथा 'आयुर्घृतमि'ति। अत्र ह्यायुषः कारणे घृते तद्गतकार्यकारणभावाल्लक्षणापूर्वकत्त्वेनायुष्ट्वं कार्यं तच्छब्दश्चेत्युभयमुपचरितम्। तस्माच्छुद्धोऽयमुपचारः।**

**गौणः पुनरुपचारो यत्र मूलभूतोपमानोपमेयभावसमाश्रयेणोपमानगतगुणसदृशगुणयोगलक्षणां पुरःसरीकृत्योपमेय**

**उपमानशब्दस्तदर्थश्चाध्यारोप्यते। स हि गुणेभ्य आगतत्वाद् गौणशब्देनाभिधीयते, यथा 'गौर्वाहीक' इति। अत्र हि गोगतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादियोगाद् वाहीके गोशब्दगोत्वयोरुपचारः।**

**केचित् तु उपचारे शब्दोपचारमेव मन्यन्ते, नार्थोपचारम्, तदयुक्तम्, शब्दोपचारस्यार्थोपचाराविनाभावित्वात्।**

**एवमयमुपचारः शुद्धगौणभेदेन द्विविधोऽभिहितः।**

## (सुबोधिनी)

शुद्धाव्यतिरिक्ताया उपचारमिश्रालक्षणाया अपि भेदान् प्रतिपादयितुमुपक्रमते - **इदानीमुपचारमिश्रामिति**। इदानीमधुना, उपचारमिश्राम् उपचारेण सहितां लक्षणां चतुर्धात्वेन चतुष्प्रकारत्वेन निरूपयितुं निर्णेतुमाहावोचत्। **आरोपाध्यवसानाभ्यामिति**। शुद्धगौणोपचारयोः शुद्धोपचारगौणोपचारयोः, आरोपाध्यवसानाभ्यां आरोपश्चाध्यवसानश्च ताभ्यां, प्रत्येकं लक्षणाभेदमिति शेषः, भिद्यमानत्वात् भिद्यत इति भिद्यमानं तस्माद्, भेदयुक्तत्वादित्यर्थः, उपचारः[७] वस्त्वन्तरे वस्त्वन्तरस्यारोपः, चतुर्विधः चतुष्प्रकारः। अयमर्थः प्रथममुपचारो द्विविधः, शुद्धोपचारो गौणोपचारश्च। तयोश्च प्रत्येकं सारोपासाध्यवसानत्वेन द्विधात्वेनोपचारमिश्रालक्षणा चतुर्धेति।

उपचारमिश्रालक्षणाया द्वैविध्यं प्रतिपादयितुमाह - **द्विविध उपचार** इति। स्पष्टम्। तत्र शुद्धोपचारस्य लक्षणमुदाहरणेन संगमयितुमाह - **तत्र शुद्ध** इति। तत्र शुद्धः शुद्धोपचारः, यत्र मूलभूतस्य मूले भवतीति मूलभूतं तस्य, उपमानोपमेयभावस्य उपमीयत अनेनेत्युपमानं यथा चन्द्रः; उपमीयत असावित्युपमेयं यथा मुखं;

---

७. वस्तुनि वस्त्वन्तरस्यारोप उपचारः।

तयोर्भावस्तस्य, सादृश्यधर्मस्येत्यर्थः, अभावात्, उपमानगताश्चन्द्रादिगता वाहीकगता वा ये गुणाः कमनीयतादयो जाड्यादयो वा, तत्सदृशगुणानां योगेन या लक्षणा, साऽसंभवा तस्मात्, सादृश्येतरात् कार्यकारणभावादिसंबन्धाच्च, लक्षणया लाक्षणिकाभिधाव्यापारेण, वस्त्वन्तरे भिन्ने वस्तुनि, वस्त्वन्तरं भिन्नं वस्तूपचर्यत आरोप्यते। यथा - 'आयुर्घृतमि'ति, आयुर्हि घृतस्य कार्यमिति आयुर्घृतयोः कार्यकारणभावसंबन्धः, स चोपमानोपमेयभावरूपसादृश्यसंबन्धातिरिक्तः। अतोऽत्र घृते तत्कार्यस्यायुष आरोपः क्रियते। **अत्र ह्यायुष** इति। अत्र 'आयुर्घृतमि'त्यत्र आयुषः कारणे घृते, तद्गत आयुर्घृतगतो य कार्यकारणभावस्तस्माल्लक्षणापूर्वकत्वेन लाक्षणिकाभिधाव्यापारेण, आयुष्ट्वम् आयूरूपं कार्यं तथा तच्छब्दश्च तत्प्रतिपादक आयुरिति शब्दश्चेत्युभयम्, उपचरितम् आरोपितम्। घृते तत्कार्यमायुः, तत्प्रतिपादकश्चायुरिति शब्द आरोपितः। एवमत्र 'आयुर्घृतमि'त्यादौ उपचारलक्षणाया मूलभूतस्य सादृश्यसंबन्धस्याभावात् कार्यकारणभावसंबन्धाच्च शुद्धोऽयमुपचारः।

गौणोपचारं दर्शयितुमाह - **गौणः पुनरुपचार** इत्यादि। गौणः सादृश्यगुणयुक्तः, उपचार आरोपः, यत्र लक्ष्ये, मूलभूतो य उपमानोपमेयभावस्तस्य समाश्रयेण, उपमानगतगुणा गौर्वहीक इत्यत्रोपमानस्य गावो ये जाड्यमान्द्यादयो गुणास्तत्सदृशैर्गुणैः सह योगः सम्बन्धो यस्यां लक्षणायां तं पुरःसरीकृत्याधारीकृत्य, उपमेये वाहीके, उपमानशब्दः गौरिति तदर्थश्च गोपिण्डार्थः, अध्यारोप्यते स्थाप्यते। स ह्यध्यारोप उपचारो वा, गुणेभ्यः सादृस्यधर्मेभ्य आगतत्वाद् गौणशब्देनाभिधीयते गौण इत्युच्यते। यथा 'गौवाहीक' इति स्पष्टम्। **अत्र हीति**। अत्र 'गौवाहीक' इत्यत्र, गोगता गोपिण्डगताः ये जाड्यमान्द्यादिगुणास्तत्सदृशजाड्यमान्द्यादियोगाद्, वाहीके

स्थानविशेषस्य जने, गोशब्दगोत्वयोरुपचार अध्यारोपः।

**केचित्त्विति**। केचित्तु अर्थोपचारमसहमानाः, शब्दोपचारमेव, मन्यन्त उररीकुर्वन्ति, नार्थोपचारमपीति तदयुक्तम् अर्थोपचारास्वीकारोऽन्याय्यः, शब्दोपचारस्यार्थोपचारेण सहाविनाभावित्वात् नित्यसंबन्धात्। अयमर्थः केचन शब्दोपचारमेव स्वीकुर्वन्ति, नार्थोपचारमपि। अर्थात् केवलं वाहीकादौ शब्दे गोशब्दस्यैवोपचारं स्वीकुर्वन्ति, न च वाहीके गोपिण्डारोपो युक्त इति वदन्ति। परं तन्न युक्तमिति मुकुलभट्टस्याभिप्रायः। यतो ह्यर्थाधारेणैव शब्दः प्रयुज्यते, अर्थं विना शब्दप्रयोगश्च निराधारः, शब्दार्थयोरविनाभावसंबन्धाच्च। अतः वाहीके गोशब्दस्य तदर्थस्य चोभयस्योपचारःस्वीकर्तव्य इति दिक्।

**एवमयमिति**। एवमयमुपचार एष अध्यारोपः, शुद्धगौणभेदेन द्विविधः, कार्यकारणभावादिसंबन्धात् शुद्धः, सादृश्यगुणयुक्तत्वाच्च गौण इति द्विप्रकारोऽभिहितः। अयमर्थो द्विधा वस्तुनि वस्त्वन्तरमारोप्यते; क्वचित् कार्यकारणभावादिसंबन्धात्, अन्यत्र च सादृश्यसंबन्धात्। कार्यकारणभावादिसंबन्धे गुणस्यायोगात् शुद्ध उपचारः, गौणे चोपमानोपमेययोः सादृश्यगुणसंबन्धाद् गौण उपचार इति स्पष्टम्।

**(सङ्क्रमनी)**

उपचारमिश्रा लक्षणा के भेदों को दिखाते हुए कहते हैं- **इदानीमुपचारमिश्राम्** इत्यादि। अभी उपचारमिश्रा लक्षणा के चार भेदों को निरूपित करने के लिए कहते हैं-

**(कारिका)** शुद्धोपचार एवं गौणोपचार में से प्रत्येक के सारोपा एवं साध्यवसाना के रूप में दो प्रकार हो कर उपचारमिश्रा लक्षणा चार प्रकार की होती है।

कारिका का अर्थ स्पष्ट करते हुए कहते हैं- **द्विविधः उपचारः** इत्यादि। उपचार दो प्रकार का है शुद्ध एवं गौण। उपचार का अर्थ पहले ही

स्पष्ट कर दिया गया है कि उपचारमिश्रा वहाँ है जहाँ एक वस्तु में उस से भिन्न वस्तु अभिन्न रूप में आरोपित होता है वह उपचार है। शुद्धोपचार वह है जहाँ मौलिक उपमानोपमेयभाव के अभाव होने से, उपमान में होने वाले गुणों के समान गुणों से युक्त लक्षणा के अभाव से अर्थात् सादृश्य धर्म के अभाव से कार्यकारणभाव आदि संबन्धों से लक्षणाद्वारा एक वस्तु में अन्य वस्तु का आरोप होता है। जैसे कि 'आयुर्घृतम्' इति। आयुः का कारण घृत में होने वाले कार्यकारणभावात्मक लक्षणा से आयुः रूपक कार्य एवं अयुः यह शब्द उभय आरोपित होता है। इसीलिए यह शुद्ध उपचार है। अर्थात् जहाँ सादृश्यसंबन्ध से भिन्न कार्यकारणभाव आदि किसी अन्य संबन्ध से एक वस्तु में तद्भिन्न अन्य वस्तु का आरोप होता है वह शुद्ध उपचार है।

गौण उपचार वहाँ है जहाँ मूलभूत उपमानोपमेयभाव के आश्रय से उपमान पदार्थ के गुणों के समान गुणों के लक्षणों से संबद्ध लक्षणा के आश्रय से उपमेय में उपमान शब्द और उसका अर्थ दोनों आरोपित होते हैं। गुणों से युक्त होने से या गुणों के सादृश्य से निरूपित होने से यह लक्षणा गौणी लक्षणा कही जाती है। जैसे 'गौर्वाहीकः' (अर्थात् गाय वाहीक या बलूचीस्तानी व्यक्तिविशेष है) यह। यहाँ गाय में होने वाले जडता एवं मन्दता आदि गुणों के समान गुण वाहीक बलूचीस्तानी व्यक्तिविशेष में दिखने से वाहीक में गोशब्द तथा गोत्व रूपी अर्थ का आरोप होता है। अर्थात् गाय एवं वाहीक उभय संपूर्ण भिन्न वस्तु या प्राणी हैं, तथापि वाहीक में जो गाय शब्द एवं गोत्व रूपी अर्थ का आरोप होता है उसका कारण वाहीक में विद्यमान गाय के समान जडता एवं मन्दता आदि गुणों का संबन्ध।

कुछ लोग शब्दोपचार ही मानते हैं अर्थात् शब्द में ही शब्द का आरोप को मानते हैं, न कि अर्थोपचार भी। परन्तु यह उचित नहीं है। क्यों कि अर्थोपचार के बिना तो शब्दोपचार होता ही नहीं। अर्थात् यदि वाहीक में गोगत जडता एवं मन्दता आदि गुण रूपक अर्थों का संबन्ध न हो तो वाहीक शब्द में गो-शब्द का आरोप नहीं हो सकता है। इस प्रकार उपचारमिश्रा लक्षणा शुद्धा एवं गौणी के रूप में दो प्रकार कही गयी है।

(मातृका)

{अध्यारोपाध्यवसाने}

तस्य च प्रत्येकं द्वैविध्यम्, अध्यारोपाध्यवसानाभ्याम्। यत्राध्यारोप्यारोपविषययोर्भेदमनपह्नुत्यैव वस्त्वन्तरे वस्त्वन्तरमुपचर्यते तत्रानपह्नुतस्वरूप एव वस्त्वन्तरे वस्त्वन्तरस्याधिकस्याऽऽरोप्यमाणत्वादध्यारोपः, यथा पूर्वोक्तयोरुदाहरणयोः। तथा हि आयुर्घृतमित्यत्र नायुर्लक्षणकार्यान्तर्लीनतया कारणभूतस्य घृतस्य प्रतिपत्तिः, स्वरूपेणैव तस्य प्रतिपत्तेः। स्वरूपेणैव तु तस्य प्रतीयमानस्यायुःकारणत्वादायुष्ट्वं प्रतीयते। तेनात्राध्यारोपः। एवं गौर्वाहीक इत्यत्रापि उपमानोपमेयस्वरूपानपह्नवात्। तदेवं यत्रोपचर्यमाणेनोपचर्यमाणविषयस्य स्वरूपं नापह्नूयते तत्राध्यारोपः।

यत्र तूपचर्यमाणविषयस्योपचर्यमाणेऽन्तर्लीनतया विवक्षितत्वात् स्वरूपापह्नवः क्रियते तत्राध्यवसानम्। तत्र शुद्धोपचारेऽध्यवसानस्योदाहरणं 'पञ्चाला' इति। अत्र हि पञ्चालापत्यनिवासाधिकरणत्वाज्जनपदे लक्षितलक्षणया पञ्चालशब्दः प्रयुज्यते। पञ्चालेनापत्यानां लक्षणात्, अपत्यैश्च स्वनिवासाधिकरणस्य जनपदस्य। न चात्रोपचर्यमाणार्थ-विषयस्योपचर्यमाणाद् भेदेन प्रतिपत्तिः उपचर्यमाणार्थनिगीर्णतयैव तस्य प्रतिपत्तेः। तेनात्रोपचारत्वं रूढिमाहात्म्याद् भ्रष्टमिव लक्ष्यते। अतोऽत्राध्यवसानगर्भः शुद्ध उपचारः। गौणोपचारे तु अध्यवसानस्योदाहरणं 'राजे'ति। राजशब्दो ह्यत्र प्रयोगदर्शनात् क्षत्रियो मुख्यया वृत्त्या प्रयुक्तः सन् शूद्रादौ क्षत्रियगतजनपदपरिपालनसदृशजनपदपरिपालनयोगलक्षण-पूर्वकतया गौणवृत्त्या युज्यते। न चात्र झगित्येव

**गौणत्वस्यावगतिः, विचारणाव्यवस्थाप्यत्वात्। तेनात्र गौणत्वं झगित्येवाप्रतीयमानत्वात् भ्रष्टं सद् विचारणया समधिगम्यते। अतोऽत्राध्यवसानगर्भो गौण उपचारः। तदेवमुचारश्चतुर्विधः प्रविभक्तः।**

**एतेन चतुर्विधेनोपचारेण सह पूर्वोक्तौ द्वौ लक्षणाभेदौ संकलय्य षट्प्रकारा लक्षणा वक्तव्या।**

**(सुबोधिनी)**

उपचारमिश्रालक्षणायाः पुनरपि भेदद्वयं प्रतिपादयितुमाह - **तस्य चेति**। तस्य च शुद्धोपचारगौणोपचारत्वेन द्विविधस्योपचारस्य, प्रत्येकं द्वैविध्यं द्विप्रकारत्वम्। आरोपाध्यवसानाभ्याम् अध्यारोपोऽध्यवसानं चेति। तदेव लक्षयति **यत्रे**ति। अध्यारोप्यश्चाऽऽरोपविषयश्च तयोराधेयाऽऽधारयोः, भेदमनपह्नुत्यैव पारस्परिकमन्तरमनिगीर्यैव, वस्त्वन्तरे भिन्ने वस्तुनि, वस्त्वन्तरं भिन्नं वस्तूपचर्यत आरोप्यते, तत्रानपह्नुतस्वरूपः (अनपह्नुतं स्वरूपं यस्य सः) एव अनिगीर्णविषय एव वस्त्वन्तरे भिन्ने वस्तुनि घृतादौ, वस्त्वन्तरस्याधिकस्य भिन्नस्योपमानभूतस्याधिकगुणयुक्तस्यारोप आरोप्यमाणत्वादध्यारोप इति। यथा पूर्वोक्तयोरुदाहरणयोः आयुर्घृतमित्यत्र गौर्वाहीक इत्यत्र च। उदाहरणे लक्षणं संगमयितुं प्राह - **तथा ही**ति। आयुर्घृतमित्यत्रायुर्लक्षणकार्यं आयूरूपकार्यं कारणभूतस्य घृतस्य, न अन्तर्लीणतया नान्तर्निगीर्णत्वेन प्रतिपत्तेः ज्ञानात्। **स्वरूपेणैवे**ति। स्वरूपेणैव आत्मरूपेणैव, तस्य प्रतीयमानस्य घृतस्य, आयुःकारणत्वात् आयुषः कारणत्वात्, आयुष्ट्वम् आयूरूपं, प्रतीयते ज्ञायते। तेनात्राध्यारोप इति स्पष्टम्। अपरं लक्षयितुमाह - **एवं गौर्वाहीक** इति। गौर्वाहीक इत्यत्राप्युदाहरणे उपमानस्य गौरित्यस्य उपमेयस्य वाहीक इत्यस्य च स्वरूपयोरनपह्नवादनिगीरणात्। पुनरपि भेदं स्पष्टीकरोति तदेवमिति। तदेवं तस्मादेवंप्रकारेण, यत्रोपचर्यमाणेनाऽऽरोप्यमाणेन

वस्त्वन्तरेण, उपचर्यमाणविषयस्य प्रकृतस्य उपचारस्याश्रयभूतस्य विषयस्य घृतादेः, वाहीकादेर्वा, स्वरूपं निजरूपं, नापह्नूयते न निगीर्यते, तत्राध्यारोप इति स्पष्टम्।

अध्यवसानं लक्षयितुमाह - **यत्र तूपचर्यमाणे**त्यादि। यत्र तु पक्षान्तर उपचर्यमाणविषयस्य प्रकृतस्य वर्ण्यमानस्य वा पदार्थस्य, उपचर्यमाणेऽप्रकृत उपमानभूते वस्त्वन्तरे, अन्तर्लीनतयाऽन्तर्निगीर्णतया, विवक्षितत्वात् कथयितुमिष्टत्वात्, स्वरूपापह्नवः आत्मरूपगोपनं, क्रियते विधीयते, तत्राध्यवसानम्। तत्र शुद्धोपचारे अध्यवसानस्योदाहरणं 'पञ्चाला' इति स्पष्टम्। **अत्र हीति**। अत्र 'पञ्चाला' इत्यत्र पञ्चालदेशस्य येऽपत्यास्तेषां निवासस्य यदधिकरणं तस्य भावस्तस्मात् पञ्चावप्रदेशनिवासस्थानत्वात्, जनपदे प्रदेशविशेषे (पञ्चावाख्ये), लक्षितलक्षणया लाक्षणिकशब्दव्यापारेण, पञ्चालशब्दः 'पञ्चाला' इति पदं, प्रयुज्यते। **पञ्चालेनापत्यानामिति**। पञ्चालेन पञ्चालपदेन, अपत्यानां तत्सन्तानानां पञ्चावदेशवासिनां वा, लक्षणात् लाक्षणिकाभिधाव्यापारेण बोधनात्, अपत्यैश्च तत्सन्तानैश्च तद्देशवासिभिर्वा, निवासाधिकरणस्य जनपदस्य निजनिवासस्थानाविशेषस्य (पञ्चावस्य), लाक्षणिकाभिधाव्यापारेण बोधः क्रियते। **न चोपचर्यमाणे**ति। उपचर्यमाणार्थविषयस्य आरोपविषयस्यापत्यवाचकस्य पञ्चालपदस्य, उपचर्यमाणात् आरोप्यमाणाज्जनपदविशेषात्, न भेदेन प्रतिपत्तिः न भेदपूर्वकं ज्ञानम्। अभेदप्रतिपत्तेः कारणं प्रतिपादयति - **उपचर्यमाणार्थे**ति। उपचर्यमाणार्थे आरोपविषये पञ्चाले, निगीर्णतयैव अपह्नुततयैव, तस्यारोप्यमाणस्य जनपदविशेषस्य, प्रतिपत्तेः ज्ञानात्। अयमर्थो जनपदविशेषस्यापह्नवपूर्वकं प्रयोगात् जनपदविशेषापत्यवाचकपञ्चालपदयोरभेदबुद्धिः। **तेनात्रे**ति। अत्र 'पञ्चाला' इत्यत्र तेन आरोपविषयारोप्यमाणयोरभेदबुद्धेः कारणाद्, उपचारत्वमारोपत्वं, रूढिमाहात्म्यात् प्रसिद्धिवशात्, भ्रष्टमिव च्युतमिव,

प्रतीयते। अयमर्थः पञ्चालपदेन यथाऽपत्यार्थो बोध्यते तथा जनपदविशेषार्थोऽपि. अत एवमनुभूयते यथाऽत्र न लाक्षणिकः प्रयोगोऽपि तु वाचकप्रयोग इति। अतोऽत्रोपचारो भ्रष्ट इव लक्षणाभाव इव प्रतीयते। **अतोऽत्रेति**। अतोऽत्र 'पञ्चाला' इत्यत्र अध्यवसानगर्भः शुद्ध उपचारः, अध्यवसानात्वम् आरोप्यमाणस्य निगीरणात्, शुद्धत्वं सादृश्यसम्बन्धव्यातिरिक्तात्वात्, उपचारत्वञ्च वस्तुनि वस्त्वन्तरस्यारोपादिति।

**गौणोपचारे त्विति**। गौणोपचारे सादृश्यमूलोपचारे, त्विति व्यतिरेके, अध्यवसानस्य निगीरणस्योदाहरणं राजेति। उदाहरणे लक्षणं संगमयितुमाह - **राजशब्दोऽह्यत्रेति**। अत्र 'राजा' इत्यत्र राजशब्दो नृपवाचकं पदं, प्रयोगदर्शनाद् व्यवहारबलात्, मुख्यया वृत्त्या मुख्येनाभिधाव्यापारेण, क्षत्रिये प्रजापालनवृत्तिमज्जातिविशेषे, प्रयुक्तः सन् व्यवहृतः सन्, अन्यत्र शूद्रादौ तद्भिन्नवृत्तिमज्जातिविशेषे, क्षत्रियगतं क्षत्रियधर्मोचितं यज्जनपदपरिपालनं तत्सदृशः तत्समो यो जनपदपरिपालनयोगो जनपदपरिपालनवृत्तिसंबन्धः स च लक्षणपूर्वकं यस्य तस्य भावस्तया तद्वृत्तिसंबन्धलक्षणपूर्वकत्वेन, गौणवृत्त्या लाक्षणिकाभिधाव्यापारेण, युज्यते संबध्यते। **न चात्रेति**। अत्र 'राजा' इत्यत्र, झगित्येव शब्दश्रवणाव्यवधानेन, न गौणत्वस्यावगतिः लाक्षणिकत्वस्य ज्ञानं न भवति। **विचारणाव्यवस्थाप्यत्वादिति**। विचारणाया विमर्शस्य परं, व्यवस्थाप्यत्वात् निर्धार्य्यत्वात्। **तेनात्र गौणत्वमिति**। गौणत्वं लाक्षणिकत्वं, झगित्येवाप्रतीयमानत्वात् लक्ष्यार्थावगतौ सत्यां सद्यः प्रतीयमानाभावात्, भ्रष्टं सत् च्युतं सत्, विचारणया विमर्शद्वारा, सम्यक् तथात्वेन, अधिगम्यते ज्ञायते। अर्थात् 'राजा' इत्यस्य शूद्रार्थे प्रयोगस्य लाक्षणिकत्वप्रतीतिर्न झटित्यवभासतेऽपि तु विचारपरमिति, वाचकपदमिव प्रतीयत इत्यत्रापि गौणत्वं, भ्रष्टमिव लाक्षणिकप्रयोगाभाव इव प्रतीयते।

**अतोऽत्राध्यवसानगर्भगौण उपचार** इति। अध्यवसानत्वं राज्ञि शूद्रस्य निगीरणात्, गौणत्वं क्षत्रियोचितजनपदपरिपालनवृत्तिसदृशवृत्तिरूप-सादृश्यसंबन्धात्, उपचारत्वं च वस्तुनि शूद्रे वस्त्वन्तरस्य राज्ञः क्षत्रियस्य वाऽऽरोपात्। उपचारस्य भेदान् संकलयितुमाह - **तदेवमिति**। एवमुपर्युक्तप्रकारेण सारोपागर्भः शुद्धोपचारः, साध्यवसानगर्भः शुद्धोपचारः, सारोपागर्भो गौणोपचारः, साध्यवसानगर्भः गौणोपचारश्चेति उपचारश्चतुर्विधः प्रविभक्तः चतुर्धात्वेन विभाजितः। **एतेनेति**। एतेन चतुर्विधेनोपचारेण सह पूर्वोक्तौ द्वौ लक्षणाभेदौ उपादान-लक्षणत्वेन द्वौ भेदौ संकलय्य संमिश्र्य संयोज्य वा, षट्प्रकारा लक्षणा वक्तव्या लाक्षणिकाभिधाव्यापारस्य षड्विधत्वमवगन्तव्यम्। ते च षट् प्रकारा अधः प्रदीयन्ते -

**१. शुद्धा उपादानलक्षणा यथा गौरनुबन्ध्यः अथवा पीनो देवदत्तो दिवा न भुंक्ते इत्यत्र।**

**२. शुद्धा लक्षणलक्षणा यथा गङ्गायां घोषः इत्यत्र ।**

**३. सारोपगर्भा शुद्धोपचारा यथा आयुर्घृतम् इत्यत्र ।**

**४. सारोपगर्भा गौणोपचारा यथा गौर्वाहीकः इत्यत्र ।**

**५. साध्यवसानगर्भा शुद्धोपचारा यथा राजा इत्यत्र ।**

**६. साध्यवसानगर्भा गौणोपचारा यथा पञ्चाला इत्यत्र ।**

लक्षणाभेदा निम्नांकितचित्रेण सम्यक् स्पष्टीभवति। तथा हि -






शुद्धोपचार एवं गौणोपचार के अध्यारोप एवं अध्यवसान के रूप में प्रत्येक दो प्रकार के हो कर चार प्रकार की उपचारमिश्रा लक्षणा के भेद बतलाने हेतु कहते हैं- **तस्य च प्रत्येकं द्वैविध्यम्** इत्यादि। उपचारमिश्रा लक्षणा के जो दो प्रकार भेद बताए गये हैं उसके प्रत्येक के दो भेद हैं, एक है आरोपा और दूसरा अध्यवसाना। जहाँ आरोप्यमाण (जिस का आरोप किया जाता है) और आरोपविषय (जिसमें आरोप होता है) के परस्पर भेदों को न छिपाकर आरोपविषय में आरोप्यमाण का आरोप किया जाता है, वहाँ अपने स्वरूप को छिपाए बिना ही एक वस्तु में अधिकगुणयुक्त उपमानभूत अन्य वस्तु का आरोप होता है वहाँ अध्यारोप है, जैसा कि पूर्वोक्त उदाहरणों में- 'आयुर्घृतम्' में और 'गौर्वाहीक' में। 'आयुर्घृतम्' में आयुः रूप कार्य में अन्तर्लीन हो कर आयुः का कारणभूत घी का ज्ञान नहीं होता है, बल्कि अपने स्वरूप घृत के रूप में ही उस आरोप विषय का ज्ञान होता है। अपने स्वरूप में ही प्रतीत होने वाला घी, आयुः के कारण के रूप में सिद्ध हो कर आयूरूप में प्रतीत होता है। उस से यहाँ अध्यारोप है। इस प्रकार 'गौर्वाहीकः' में भी उपमान गौः और उपमेय वाहीक के स्वरूप को न छिपाते हुए उपमेयभूत वाहीक में उपमानभूत गौः का आरोप होने से अध्यारोप होता है। इस प्रकार जहाँ आरोप्यमाण के द्वारा आरोपविषय का स्वरूप नहीं छिपाया जाता है वहाँ अध्यारोप होता है।

जहाँ आरोपविषय को आरोप्यमाण में अन्तर्लीन रूप में विवक्षित (प्रतिपादित) करते हुए आरोपविषय के स्वरूप को छिपाया जाता है वहाँ अध्यवसान है। शुद्धोपचार में अध्यवसान का उदाहरण 'पञ्चाला' (अर्थात्

पञ्चाल या पञ्जाव राज्य के अधिवासी) यह है। यहाँ पञ्चाल के पुत्रों के निवास का स्थान (अधिकरण) होने से जनपद (प्रदेशविशेष) अर्थ में पञ्चालशब्द लक्षितलक्षणाद्वारा प्रयुक्त होता है। इस प्रकार पञ्चालशब्द लक्षणाद्वारा पहले पञ्चाल के पुत्रों की प्रतीति कराता है, पुनः उस के अधिकरणभूत (निवासस्थानभूत) जनपद या प्रदेश की प्रतीति कराता है। यहाँ वाक्ययोजना में देशवाचक पद का प्रयोग न होने से अर्थात् केवल पञ्चालपद (जो कि पञ्चाल के अपत्यों का वाचक है) का ही प्रयोग होने के कारण उपचार के विषयभूत जनपद एवं उपचर्यमाण पञ्चाल (अपत्य) में भेदप्रतीति नहीं होती। यह अभेदप्रतीति तभी हो सकती है, जब उपचर्यमाण वस्तु निगीर्ण अर्थात् अपह्नुत हो। एतदर्थ वाक्ययोजना में प्रतीयमान अर्थ की प्रतीति के लिए केवल लक्षक पद का ही प्रयोग होता है, मानों उपचार (लक्षणा) का प्रयोग ही नहीं हो रहा है। इसप्रकार पञ्चालाः इस प्रयोग में अध्यवसानगर्भ शुद्धोपचार-लक्षणा है। गौणोपचार में अध्यवासाना का उदाहरण है 'राजा' यह। राजा इस पद का प्रयोग मुख्यवृत्ति से क्षत्रिय में होता है। फिर भी क्षत्रिय का जनपद का पालन रूप कार्य के समान कार्य के संबन्ध में शूद्र आदि को भी राजा पद से गौण वृत्ति से (गौणी लक्षणा से)बताया गया है। यहाँ शूद्रादि में राजा पद के प्रयोग की गौणत्वप्रतीति शीघ्र नहीं होती है, अपि तु विचार के पश्चात् ही होती है। अतः राजा इस पद में लाक्षणिक प्रयोग का ज्ञान तुरन्त न होने से यहाँ भी लाक्षणिक प्रयोग भ्रष्ट सा प्रतीत होता है मानों उपचार (लक्षणा) का प्रयोग ही नहीं हो रहा है ऐसा मालूम पडता है, बाद में विचार करने पर प्रयोग की लाक्षणिकता मालूम पडती है। इस प्रकार 'राजा' यहाँ पर राजा में शूद्रादि के अन्तर्लीन होने से एवं शूद्रादि के क्षत्रियोचित गुणों से युक्त होने से अध्यवसानगर्भ गौण उपचार है। इस प्रकार उपचार चार प्रकार का होता है जैसे कि-सारोपागर्भ शुद्धोपचार, साध्यवसानगर्भ शुद्धोपचारः, सारोपागर्भ गौणोपचार और साध्यवसानगर्भ गौणोपचार। उपचार के इन चार प्रकार के भेदों के साथ पूर्वोक्त शुद्धा लक्षणा के दोनों भेदों को मिला कर लक्षणा के छः भेद होते हैं। वे निम्नवत् हैं-

१. शुद्धा उपादानलक्षणा, उदाहरण- गौरनुबन्ध्यः अथवा पीनो देवदत्तो दिवा न भुंक्ते ।

२. शुद्धा लक्षणलक्षणा, उदाहरण–गङ्गायां घोषः ।

३. सारोपा शुद्धोपचारा, उदाहरण- आयुर्घृतम् ।

४. सारोपा गौणोपचारा, उदाहरण- गौर्वाहीकः ।

५. साध्यवसाना शुद्धोपचारा, उदाहरण- राजा ।

६. साध्यवसाना गौणोपचारा, उदाहरण- पञ्चाला ।



## (मातृका)

{शुद्धाध्यारोपाध्यवसानाभेदानां विषयविभागः}

**एषा च लक्षणा त्रिस्कन्धा शुद्धत्वाद्, अध्यारोपाद्, अध्यवसानाच्च। तत्र शुद्धस्कन्धस्य द्वैविध्यमुपादानलक्षणाभ्यामुक्तम्, अध्यारोपाध्यवसानस्कन्धयोरपि प्रत्येकं द्विप्रभेदता, शुद्धगौणोपचारमिश्रत्वात्। तत्रैतेषां त्रयाणां स्कन्धानां विषयविभागं प्रदर्शयितुमाह -**

**तटस्थे लक्षणा शुद्धा स्यादारोपस्त्वदूरगे।।५।।**
**निगीर्णेध्यवसानं तु रूढ्यासन्नतरत्वतः।**

**यैषा लक्षणा शुद्धा उपादानलक्षणात्मकत्वेन द्विप्रभेदा प्रतिपादिता सा लक्षकार्थानुपरक्तत्वात् तटस्थतया प्रतीयमाने लक्ष्येऽर्थे द्रष्टव्या। न हि तत्र लक्षकार्थोपरक्ततया लक्ष्यस्यार्थस्यावगतिः। तथा हि 'गंगायां घोष' इत्यत्र घोषाधिकरणभूततटोपलक्षणाभिसंधानेन 'गंगायां घोषो न वितस्तायामि'ति गंगाशब्दे प्रयुज्यमाने तटस्य स्रोतोवेशेषेणोपलक्षकत्वमात्रोपयुक्तत्वेनोपरागो न प्रतीयते, तटस्थत्वेनैव तस्य तटस्य प्रत्ययात्। एवमुपादानेऽपि वाच्यम्, यथा 'पीनो देवदत्तो दिवा न भुंक्त' इति।**

## (सुबोधिनी)

**एषा च लक्षणे**ति। एषा च लक्षणा पूर्वं प्रतिपादिता, त्रिस्कन्धा त्रयः स्कन्धाः यस्याः सा त्रिशाखेत्यर्थः, शुद्धत्वाद्, अध्यारोपाद्, अध्यवसानाच्चेति। **तत्रे**ति। तत्र शुद्धस्कन्धस्य द्वैविध्यं शुद्धशाखाया द्विप्रकारत्वमुपादानलक्षणाभ्यामुक्तम्। अध्यारोपाध्यवसानस्कन्धयोरपि प्रत्येकं द्विप्रभेदता, शुद्धगौणोपचारमिश्रत्वात् शुद्धोपचारमिश्राध्यारोपः, गौणोपचारमिश्राध्यारोपः, शुद्धोपचारमिश्राध्यवसानं गौणोपचारमिश्राध्यवसानञ्चेति मिलित्वाऽध्यारोपाध्यवसानशाखयोः चतुष्प्रकारत्वं प्रतिपादितमित्यर्थः। **तत्रैतेषा**मिति। तत्रैतेषां त्रयाणां स्कन्धानां त्रिधात्वेन विभक्ताया लक्षणायाः पूर्वोक्तानां शाखानां विषयविभागं क्षेत्रं प्रदर्शयितुमाह।

**तटस्थे** इत्यादि। तटस्थे शुद्धा स्यात्। अदूरगे आरोपः (स्यात्)। निगीर्णे त्वध्यवसानं रूढ्या आसन्नतरत्वतः लक्षणा भवतीत्य**न्वयः**। तटस्थे लक्ष्यलक्षकयोः संबन्धाभावे, शुद्धा लक्षणा। यदा लक्ष्यलक्षकयोर्न कश्चित् संबन्धो विवक्षितस्तदा शुद्धा लक्षणा भवतीत्यर्थः। अदूरगे अदूरवर्तिनि निकटे वा, आरोपः अध्यारोपः। लक्ष्यलक्षकयोः सामीप्येऽध्यारोप इत्यर्थः। निगीर्णेऽपह्नवे, अध्यवसानम्। लक्षके लक्ष्यं यदा निगीर्णं भवति तदाऽध्यवसानं भवति। अध्यवसानं तु रूढ्यासन्नतरत्वतः तच्चाध्यवसानं रूढित्वेनासन्नतरत्वेन चेति द्विविधं, वक्ष्यते चाग्रे ग्रन्थकृता '**रूढित्वादासन्नतरत्वाच्च निगीर्णेऽर्थेऽध्यवसानं स्यादित्यर्थ**' इति।

तदेव वृत्तौ स्पष्टीक्रियते **यैषा लक्षणे**ति। यैषा शुद्धा लक्षणा उपादानलक्षणात्मकत्वेन द्विप्रभेदा प्रतिपादिता, शुद्धालक्षणाया यद् द्वैविध्यमुपादानलक्षणालक्षणलक्षणात्वेन प्रतिपादितं सा, लक्षकार्थानुपरक्तत्वात् लक्षकार्थेन सहासंबद्धत्वात्, तटस्थतया असम्बद्धत्वेन, प्रतीयमाने लक्ष्येऽर्थे, द्रष्टव्याऽवलोकयितव्या। अयमर्थो

यल्लक्ष्यलक्षकयोः संबन्धाभावरूपताटस्थ्यात् शुद्धेति। **न हि तत्रे**ति। तत्र शुद्धायां लक्षणायां, लक्षकार्थोपरक्ततया लक्षकार्थेन सह संबद्धतया, लक्ष्यस्यार्थस्यावगतिर्ज्ञानं नेति। **तथाही**ति। 'गङ्गायां घोष' इत्यत्र, घोषाधिकरणभूततटोपलक्षणाभिसंधानेन घोषस्याधिकरणभूतं घोषाधिकरणभूतं, तटस्योपलक्षणं तटोपलक्षणं, स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणं, प्रस्तुते च गङ्गापदं गङ्गाप्रवाहबोधकत्वे सति तत्तटबोधकमिति तटोपलक्षणं, तस्य चाभिसंधानेन तटस्य बोधनेन, गङ्गायां गङ्गानद्यां घोषः आभीरपल्लीविशेषो, न वितस्तायां न वितस्ताख्यायां नद्यामिति, गङ्गाशब्दे प्रयुज्यमाने गङ्गाशब्दस्य प्रयोगे सति, तटस्य स्रोतोविशेषणोपलक्षकत्वमात्रोपयुक्तत्वेन स्रोतोविशेषस्य तटमिति बोधनमात्रप्रयोजनेन, उपरागो संबन्धो, न प्रतीयते न बोध्यते। तटस्थत्वेनैव असंबद्धत्वेनैव तस्य तटस्य, प्रत्ययात् ज्ञानात्। गङ्गापदं ह्यत्र नदीसामान्यबोधनार्थं तटोपलक्षणार्थञ्च प्रयुक्तं, न हि गङ्गया सह तटस्य कश्चित्संबन्धोऽस्तीति तटस्य तटस्थत्वेन बोधो जायत इत्यर्थः। **एवमुपादानेऽपी**ति। एवं पूर्वोक्तप्रकारेण, उपादानेऽपि उपादानलक्षणायामपि, वाच्यं संगमनीयं, यथा 'पीनो देवदत्तो दिवा न भुंक्ते' इति। अत्र लक्षकस्य पीनत्वस्य लक्ष्यस्य च रात्रिभोजनस्य उपरागाभावरूपताटस्थ्याच्छुद्धात्वमिति ग्रन्थकृन्मतम्।

(अत्रेदमवधार्यं यत् 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र रात्रिभोजनं न लक्षणाबोध्यमिति मम्मटादय आचार्या आमनन्ति। तदनुसारमत्र रात्रिभोजनं श्रुतार्थापत्त्याऽर्थापत्त्या वा भवति, न तु लक्षणाद्वारा, यतो हि लक्षणानिमित्तं रूढिप्रयोजनयोरन्यतरस्य सद्भाव अपेक्षते। तदुक्तं मम्मटेन 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यत्र च रात्रिभोजनं न लक्ष्यते, श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वादिति[८]। तथैव 'गौरनुबन्ध्यः' इत्यत्रापि लक्षणास्वीकारो न मम्मटाभिमतः. जातिव्यक्त्योरविनाभावसंबन्धात् जात्या व्यक्तिः स्वत एवाक्षिप्यते, तदर्थं

च लक्षणास्वीकारोऽनुचितो गौरवान्मानाभावाच्च। तदुक्तं तेन- 'गौरनुबन्ध्यः' इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते, न तु शब्देनोच्यते 'विशेष्यं नाभीधा गच्छेत् क्षीणशक्तिर्विशेषणे' इति न्यायात्। इत्युपादानलक्षणा तु नोदाहर्तव्या। न ह्यत्र प्रयोजनमस्ति न वा रूढिरियम्। व्यक्त्यविनाभावित्वात्तु जात्या व्यक्तिराक्षिप्यते[९] इति। 'गङ्गायां घोष' इत्यत्र च भेदरूपं ताटस्थ्यं नाचार्यमम्मटस्य संमतम्। यतो हि शीतत्वपावनत्वरूपप्रयोजनप्रतिपत्तये एवात्र लाक्षणिकशब्दस्य प्रयोगः कृतः। अपरञ्चात्र लक्ष्यलक्षकयोः तटगङ्गाप्रवाहयोः भेदरूपताटस्थ्यस्वीकारे न प्रतिपिपादयिषितप्रयोजनसंप्रत्ययो भवेत्। तथा सति 'गङ्गातटे घोष' इति वाचकशब्दप्रयोग एव वरम्, न पुनर्लाक्षणिकस्य। तदुक्तमाचार्यमम्मटेन अनयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम्। तटादीनां हि गङ्गादिशब्दैः प्रतिपादने तत्त्वप्तिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः। गङ्गासंबन्धमात्रप्रतीतौ तु गङ्गातटे घोषः इति मुख्यशब्दाभिधानाल्लक्षणायाः को भेदः[१०] ? मुकुलभट्टस्तु केवलं प्रवाहविशेषं प्रतिपादयितुं गङ्गाभिन्नवितस्तादिनदीं व्यावर्तयितुं गङ्गापदस्य प्रयोगमकार्षीत्, न तस्य शीतत्वपावनत्वप्रयोजनमत्राभीष्टम्। अतस्तेनोक्तं गङ्गायां घोषो न वितस्तायामिति गङ्गाशब्दे प्रयुज्यमाने तटस्य स्रोतोविशेषेणोपलक्षकत्वमात्रोपयुक्तत्वेनोपरागो न प्रतीयते इति।)

**(सङ्गमनी)**

लक्षणा के भेदों को तीन शाखाओं में विभक्त करने के लिए कहते हैं- **एषा च लक्षणा** इत्यादि। यह लक्षणा जो बतायी गयी है तीन स्कन्ध या

---

८. काव्यप्रकाशः, द्वितीयोल्लासः, पृ. ५७, ज्ञानमण्डललिमिटेड, वाराणसी, वि. संवत् २०४०

९. तत्रैव, पृ. ५५

१०. तत्रैव, पृ. ६१

शाखाओं में विभक्त है; जसे कि- शुद्ध-शाखा, अध्यारोप-शाखा और अध्यवसान-शाखा। उन में से शुद्धस्कन्ध के दो भेद हैं- उपादानलक्षणा और लक्षणलक्षणा। इन तीनों स्कन्धों के आपस में भेदों को दिखलाने हेतु बताते हैं-

**(कारिका)** लक्ष्य एवं लक्षण के संबन्ध के अभाव रूप तटस्थता होने पर शुद्धा लक्षणा होती है। लक्ष्य एवं लक्षण का समीप्य विवक्षित होने पर अध्यारोप-लक्षणा होती है। लक्षक पदार्थ में लक्ष्य जब अन्तर्लीन होता है तब अध्यवसाना लक्षणा होती है। जो अध्यवसाना लक्षणा कही गयी है वह रूढि (प्रसिद्धि) से और आसन्नतरता (अत्यन्त निकटता) से द्विविध होता है।

कारिका का अर्थ वृत्ति में उदाहरण के साथ दिखलाने के लिए कहते हैं- **यैषा लक्षणा** इत्यादि। उपादानलक्षणा और लक्षणलक्षणा के रूप में जिस शुद्धा लक्षणा के दो भेद बताए गये हैं वहाँ लक्ष्य अर्थ का लक्षक अर्थ के साथ संबन्ध न होने से लक्ष्य अर्थ में तटस्थ के रूप में देखी जा सकती है। अर्थात् लक्ष्य एवं लक्षक पदार्थों में संबन्ध के अभाव रूप तटस्थता होने पर शुद्धा लक्षणा है। क्यों कि वहाँ शुद्धा लक्षणा में लक्ष्य अर्थ लक्षक अर्थ के साथ संबद्ध के रूप में प्रतीत नहीं होता है। जैसे कि- 'गङ्गायां घोष' में गङ्गापद घोष (पल्लीविशेष) के अधिकरण (आधार) के रूप में तट का उपलक्षक हैं, यह बोध होने पर गङ्गा में घोष है वितस्ता (व्यास ) नदी में नहीं यह प्रतीति होती है, उस समय तट के स्थान पर गङ्गा पद का प्रयोग होने से गङ्गापद केवल प्रवाहविशेष रूप विशेषता का बोध ही तट में कराता है, इस प्रकार वहाँ तट में गङ्गानदी के पावनत्वादि गुणों का उपराग (संबन्ध) नहीं होता है। गङ्गापद यहाँ नदीसामान्यरूप अर्थ के बोधन के लिए एवं तट के उपलक्षण के लिए प्रयुक्त हुआ है। तट का गङ्गानदी का जो पुण्यत्व आदि धर्म है उस के साथ संबन्ध प्रतीत नहीं होता है। इस प्रकार 'पीनो देवदत्तो दिवा न भुंक्ते' (स्थूल देवदत्त दिन में भोजन नहीं करता है) इस वाक्य में भोजन द्वारा होने वाली पीनता के कारण रूप भोजन क्रिया का दिन में अभाव शब्दतः कथित है, क्योंकि कारण के

अभाव में कार्य संभव नहीं है, अतः पीनत्व रूप कार्य की सिद्धि के लिए जिस काल में कारण रूप भोजन का निषेध किया गया है, उससे भिन्न काल (रात्रि) में कारण रूप भोजन का आक्षेप होने से एवं यहाँ रात्रि रूप लक्ष्य अर्थ के साथ पीनत्व रूप लक्षक अर्थ का संबन्ध प्रतीत न होने से यहाँ उपादानलक्षणा में भी तटस्थता स्टष्ट प्रतीत होती है।

(मातृका)

**यदा तु गङ्गाशब्दाभिधेयस्य स्रोतोविशेषस्याविदूरवर्तितया तटमनपह्नुतस्वरूपं स्रोतोविशेषोपरक्ततया विवक्षितं भवति तदा पूर्वस्मिन्नुदाहरणेऽध्यारोपो भवति। स्रोतोविशेषोपरक्तस्य तटस्य प्रतीतेः स्रोतोविशेषाविदूरवर्तित्वात् स्रोतोविशेषरूपे तटे घोष इति। यदा त्वत्यन्तमासन्नतां घोषं प्रति स्रोतोविशेषस्य प्रतिपादयितुमेतद् वाक्यं स्रोतोविशेषनिगीर्णतया तटमपह्नुत्य प्रयुज्यते 'गङ्गायामेव साक्षाद् घोषो न त्वन्यत्रे'ति तदाऽध्यवसानम्।**

(सुबोधिनी)

**यदा त्विति।** यदा त्विति पक्षान्तरे, गङ्गाशब्दाभिधेयस्य गङ्गाशब्दस्य योऽभिधेयार्थो वाच्यार्थस्तस्य, स्रोतोविशेषस्य प्रवाहविशेषस्य, अविदूरवर्तितया समीपवर्तितया, अनपह्नुतस्वरूपं अनिगीर्णस्वरूपं, तटं तीरं, स्रोतोविशेषोपरक्ततया स्रोतोविशेषेण सह प्रवाहविशेषेण उपरक्ततया संबद्धतया, विवक्षितं भवति प्रतिपाद्यत्वेन वक्तुरिष्टं भवति, तदा पूर्वस्मिन्नुदाहरणे 'गङ्गायां घोष' इत्यत्र, अध्यारोपो भवति। अयमर्थः 'गङ्गायां घोष' इत्यत्र यदा गङ्गाशब्दस्य प्रवाहरूपो वाच्यार्थः समीपवर्तिनं अनिगीर्णस्वरूपं तटं, स्रोतोविशेषेण संबद्धत्वेन प्रतिपादयति तदा अध्यारोपो भवति, शुद्धाया लक्षणलक्षणाया अस्यायं भेदो यद् तत्र लक्ष्यस्य तटस्य लक्षकेण गङ्गाप्रवाहेण सह न कश्चित्

संबन्धो विवक्षितोऽस्ति, अत्र तु गङ्गाया एव तटमिति संबन्धविशेषो विवाक्षितोऽस्तीति भेदः। तदेव स्टष्टीकर्तुमाह **स्रोतोविशेषोपरक्तस्येति**। स्रोतोविशेषोपरक्तस्य तटस्य गङ्गाप्रवाहसंबद्धस्य तीरस्य, प्रतीतेर्ज्ञानात्, स्रोतोविशेषाविदूरवर्तित्वात् गङ्गाप्रवाहनिकटवर्तित्वात्, स्रोतोविशेषरूपे तटे घोष इति घोषोऽयं न तटमात्रेऽपि तु गङ्गाप्रवाहनिकटस्थे इत्यर्थः प्रतीयते। अध्यवसानस्योदाहरणं प्रदर्शयितुमाह **यदा त्वत्यन्तमासन्नतामिति**। घोषं प्रति आभीरपल्लीविशेषं प्रति, स्रोतोविशेषस्य प्रवाहविशेषस्य, अत्यन्तमासन्नतां अत्यन्तं सामीप्यं प्रतिपादयितुम्, एतद्वाक्यं 'गङ्गायां घोष' इति, स्रोतोविशेषनिगीर्णतया प्रवाहविशेषे लीनतया, तटमपह्नुत्य 'गङ्गायामेव साक्षाद्घोषः न त्वन्यत्रे'ति प्रयुज्यते तटस्यापह्नवपूर्वकं गङ्गास्रोतसि निगीर्णत्वेन गङ्गात्वमात्रसंबन्धं प्रतिपदयितुं विवक्ष्यते, तदाऽध्यवसानमिति। अध्यारोपादस्यायं विशेषो यत् तत्र तटस्यानिगीर्णत्वेन विवक्षाऽत्र तु निगीर्णत्वेनेति।

एवमत्र मुकुलभट्टेन 'गङ्गायां घोष' इति शुद्धा लक्षणलक्षणायाः, अध्यारोपस्य, अध्यवसानस्य चेति त्रितयस्योदाहरणरूपेणोपन्यस्तम्। 'गङ्गायां घोष' इत्यादौ गङ्गेतरवितस्तादिनदीव्यावर्तनमात्रप्रतीतिस्थले शुद्धालक्षणलक्षणा, गङ्गासम्बद्धतटप्रतीतिस्थले अध्यारोपः, गङ्गात्वमात्रप्रतीतिस्थले गङ्गाप्रवाहस्यात्यन्तसामीप्यबोधार्थं तु अध्यवसानमिति तन्मतसारः।

## (सङ्गमनी)

**यदा तु** इत्यादि। जब गङ्गा पद के वाच्य प्रवाह विशेष से तट की प्रतीति उसके स्वरूप का अपह्नव किये बिना ही प्रवाह विशेष से उपरक्त रूप से विवक्षित होती है, उस अवस्था में उपर्युक्त उदाहरण 'गङ्गायां घोषः' में ही अध्यारोप नामक स्कन्ध रहा करता है। अर्थात् तट की प्रतीति प्रवाहविशेष से संबद्ध रूप में प्रतीति होती है। फलतः प्रवाहविशेष रूप तट

पर घोष है; यह प्रतीति अध्यारोप में होती है। जब तट से प्रवाहविशेष (गङ्गा) की अत्यन्त निकटता के प्रतिपादन के लिए प्रवाहविशेष में तट को अन्तर्लीन करते हुए तट पद को छिपाते हुए गङ्गाप्रवाह में ही घोष या गाँव है न कि अन्यत्र इस प्रकार वाक्य का प्रयोग होता है, वहाँ अध्यवसान होता है।

इस प्रकार एक ही उदाहरण 'गङ्गायां घोषः' में विवक्षित अर्थों के अनुसार स्थलविशेषों में शुद्धोपचार, अध्यारोप एवं अध्यवसान, लक्षणा की तीनों शाखायें हो सकती हैं। 'गङ्गायां घोषः' में वितस्ता आदि गङ्गाभिन्न नदी के व्यावर्तन (भेद) रूप अर्थ विवक्षित होने पर शुद्धा लक्षणलक्षणा, तट का गङ्गा के साथ संबन्ध की प्रतीति होने पर अध्यारोपा लक्षणा, और गङ्गात्वमात्र की प्रतीति के स्थल में जहाँ गङ्गा प्रवाह का अत्यन्त सामीप्य बोध हो वहाँ अध्यवसाना लक्षणा होती है।

## (मातृका)

**यथा चैतच्छुद्धोपचारनिष्ठतयाध्यारोपाध्यवसानयोरुदाहरणमुक्तं तथा गौणेप्युपचारे वाच्यम् - 'गौर्वाहीक' इति 'गौरेवायं साक्षादि'ति च। अत्रापि यथाक्रमं गोगतगुणसदृशगुणयोगद्वारेण गोरविदूरत्वेन वाहीकस्य विवक्षितत्वाद् गोत्वाध्यारोपः, गोगतानां गुणानामुत्कटत्वेन वाहीकस्य गोत्वाध्यवसानम्।**

**यथा चासन्नतरत्वेनाध्यवसानं पूर्वं प्रविभक्तं तथा रूढत्वेनापि प्रविभक्तव्यम्, यथा पूर्वप्रदर्शितयोरुदाहरणयोः 'पाञ्चाला' इति तथा राजेति। तदिदमुक्तं 'रूढ्यासन्नतरत्वत' इति। रूढत्वादासन्नतरत्वाच्च निगीर्णेऽर्थेऽध्यवसानं स्यादित्यर्थः।**

## (सुबोधिनी)

**यथा चैतदिति**। शुद्धोपचारस्याध्यारोपाध्यवसान-रूपमुदाहरणद्वयं प्रतिपाद्याधुना गौणोपचारस्यापि तयोरेवोदाहरणे 'गौर्वाहीकः' 'गौरेवायं साक्षादि'ति च प्रतिपादयिष्येते। **अत्रापीति**। अत्रापि 'गौर्वाहीकः' इत्यत्र 'गौरेवायं साक्षाद्' इत्यत्र च, यथाक्रमं क्रमानुसारं गोगतगुणसदृशगुणयोगद्वारेण गोगता ये गुणा जाड्यमान्द्यादयः तत्सदृशा ये गुणास्तैर्योगस्तद्द्वारेण, गोरविदूरत्वेन गोर्निकटत्वेन, वाहीकस्य व्यक्तिविशेषस्य (बलुचिस्थानीयस्य), विवक्षितत्वाद् वक्तुमिष्टत्वाद्, गोत्वाध्यारोपः वाहीके गोत्वारोपः, वाहीकस्य, गोगतानां तु गुणानां जाड्यमान्द्यादीनाम्, उत्कटत्वेन अतिशयेन, दर्शनादितिशेषः, वाहीके गोत्वाध्यवसानम्। अयमर्थो यत्र लक्ष्यलक्षकयोर्मध्ये सादृश्यसम्बन्धो वर्तते तत्र गौणी लक्षणा भवति, तथा च लक्ष्यलक्षकयोः सामीप्यमात्रविवक्षायामारोपेऽध्यारोपः, अत्यन्तसामीप्यविवक्षायां लक्ष्यस्य लक्षकेऽपह्नवपूर्वकं निगीरणे त्वध्यवसानम्।

रूढ्यासन्नतरत्वत इति कारिकोक्तं पदं व्याख्यातुमाह **यथा चासन्नतरत्वेने**ति। अयमर्थो यथा पूर्वमासन्नतरत्वतो-ऽतिसामीप्यकारणाद् अध्यारोपाध्यवसानयोरुदाहरणाद् 'गङ्गायां घोष' 'गौरेवायं' चेति प्रतिपादिते तथा रूढितोऽपि प्रतिपाद्येते पञ्चाला इति राजा चेति। 'पञ्चाला' इत्यत्र पञ्चालदेशस्य येऽपत्यास्तेषां निवासस्य यदधिकरणं तस्य भावस्तस्मात् पञ्चावप्रदेशनिवासस्थानत्वात्, जनपदे प्रदेशविशेषे (पञ्चावाख्ये), लक्षितलक्षणया लाक्षणिकशब्दव्यापारेण, पञ्चालशब्दः 'पञ्चाला' इति पदं , प्रयुज्यते। अत्र पञ्चालपदं जनपदविशेषे रूढ इति अत्यन्तसामीप्याभावेऽपि लक्षणा ज्ञेया। 'राजा' इत्यत्र राजशब्दो नृपवाचकं पदं, प्रयोगदर्शनाद् व्यवहारबलात्, मुख्यया वृत्त्या मुख्येनाभिधाव्यापारेण, क्षत्रिये प्रजापालनवृत्तिमज्जातिविशेषे, प्रयुक्तः सन् व्यवहृतः सन्, अन्यत्र शूद्रादौ तद्भिन्नवृत्तिमज्जातिविशेषे, क्षत्रियगतं

क्षत्रियधर्मोचितं यज्जनपदपरिपालनं तत्सदृशः तत्समो यो जनपदपरिपालनयोगो जनपदपरिपालनवृत्तिसंबन्धः स च लक्षणपूर्वकं यस्य तस्य भावस्तया तद्वृत्तिसंबन्धलक्षणपूर्वकत्वेन, गौणवृत्त्या लाक्षणिकाभिधाव्यापारेण, युज्यते संबध्यते। अत्राऽपि 'राजा' इति पदमत्यन्तसामीप्याभावादपि रूढिवशाल्लक्षणया नृपेतरमपि शूद्रादिं बोधयति। तदेव संकलयति **तदिदमिति रूढत्वादिति** च। स्पष्टम्।

## (सुगमनी)

गौणोपचार के भेद सोदाहरण बताने हेतु कहते हैं-**यथा चैतत्** इत्यादि। जैसे शुद्धोपचार के अध्यारोप एवं अध्यवसान के रूप में दो भेद हैं वैसे गौणोपचार के भी, जिनके उदाहरण-'गौर्वाहीकः' और 'गौरेवायं साक्षात्' यह। इन दोनों उदाहरणों में क्रमशः गौ में विद्यमान जडता आदि गुणों के सदृश गुणों से युक्त होने से वाहीक की गौ से निकटता अर्थात् वाहीक गो-सदृश है, इस विवक्षा के होने पर वाहीक पर गोत्व का अध्यारोप होता है, और जब गौ के गुणों की उत्कटता वाहीक में विवक्षित होती है, तब यह गौ ही है इस प्रकार की प्रतीति के लिए वाहीक पर गोत्व का अध्यवसान होता है।

यथा चासन्नतरत्वेन इत्यादि। जिस प्रकार अत्यन्त निकटता रूप प्रयोजन के आधार पर अध्यवसान नामक पूर्व भेद जिन के उदाहरण 'गङ्गायां घोषः' और 'गौरेवायं' बताये गये हैं, उसी प्रकार रूढि में भी भेद किये जा सकते हैं। पूर्व प्रदर्शित भेद में 'पाञ्चाला' और 'राजा' इन उदाहरणों में देखा जा सकता है। इन दोनों उदाहरणों में अत्यन्त सामीप्य के अभाव में भी रूढि के कारण लक्षणा प्रसक्त होती है। इसीलिए कहा गया है रूढ्या आसन्नतरत्वतः, जिस का अर्थ यह कि रूढि से और आसन्नतरत्व से निगीर्ण अर्थ में अध्यवसान होता है।

(मातृका)

{शब्दस्य लाक्षणिकार्थेन सह वक्त्राद्यपेक्षया संबन्धः}

ननु मुख्यार्थे शब्दस्य संबन्धावधारणात् प्रतिपादकत्वमुपपद्यते, न तु लाक्षणिके तद्विपर्ययात्। तथा हि संबन्धावधारणसमये व्यवहर्तृगतयोस्तावत् शब्दप्रयोगार्थप्रतिपत्त्योरविभक्तोद्देश-वाक्यवाक्यार्थनिष्ठतया पूर्वं हेतुफलभावावसायो भवति। तदनन्तरञ्च त्रिचतुरादिदर्शनेभ्योऽन्वयव्यतिरेकाभ्यां वाक्यवाक्यार्थोद्देशप्रविभागगते ते शब्दप्रयोगार्थप्रतिपत्ती तन्निष्ठकार्यकारणभावावधारणम्, तदुत्तरकालञ्च व्यवहर्तृगतार्थप्रतिपत्त्यन्यथानुपपत्त्या शब्दार्थसंबन्धावगतिः। सा च मुख्य एवार्थे जात्यादौ चतुर्विधे, न तु लाक्षणिके षट्प्रकारे। न हि लाक्षणिकार्थेन सह शब्दस्य संबन्धः। मुख्येनैवार्थेन परिदृश्यते। तथाभावे हि सति तस्य मुख्यत्वमेव स्यान्न लाक्षणिकत्वम्।

अथ शब्दस्य मुख्यो योऽसावर्थस्तेन सह सम्बन्धो लक्ष्यमाणस्यार्थस्य दृष्ट इति तद्द्वारेण शब्दात्तस्यावगतिरित्यभिधीयते, एवं सति यदि निरपेक्षः स्वार्थप्रतिपादनद्वारेण लक्ष्यमाणमर्थमवगमयति तदा सर्वदा तमर्थमवगमयेत्, अथ सापेक्षः, किं तस्यापेक्षणीयमित्याह

वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात्।।६।।
लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः।

यः परप्रतिपत्तये वाक्यमुच्चारयति स वक्ता। साकांक्षाणां पदानामेकार्थसमूहो वाक्यम्। शब्देन मुख्यं लाक्षणिकं वाभिधाव्यापारमाश्रित्य यद् गोचरीक्रियते तद् वाच्यम्। एतेषां त्रयाणां वक्त्रादीनां व्यस्तसमस्तभेदभिन्नानां देशकालावस्थावैलक्षण्यगतसमस्तव्यस्तभेदसंयोजितानां यः स्वभावभेदप्रपञ्चः, तत एषा षट्प्रकारा लक्षणा

परामर्शकुशलैर्विवेचनीया। तथाविधवक्त्रादिसामग्र्यपेक्षयैव शब्दानां स्वार्थमवगमयतां स्वार्थद्वारेण लक्ष्यमाणार्थसम्बन्धस्य वृद्धव्यवहारेणावधारितत्वात्। एतदुक्तं भवति- न शब्दानामनवधारितलाक्षणिकार्थसंबन्धानां लाक्षणिकमर्थं प्रति गमकत्वं, नापि च तत्र साक्षात्सम्बन्धग्रहणं, किं तर्हि वक्त्रादिसामग्र्यपेक्षया स्वार्थव्यवधानेनेति। यदुक्तमाचार्यशबरस्वामिना- 'कथं पुनः परशब्दः परत्र वर्तते, स्वार्थाभिधानेनेति ब्रूमः' इति। अत्र हि स्वार्थद्वारेण लक्ष्यमाणार्थाभिनिवेशिता शब्दानामुक्ता पुनश्चासावेवाह- 'लक्षणापि हि लौकिक्येवे'ति। अत्र हि सम्बन्धावधारणसापेक्षाणां शब्दानां लक्ष्यमाणेऽर्थे प्रवृत्तिरुक्ता। व्यवहारोपारूढानि हि प्रत्यक्षादीनि प्रमाणानि लोकशब्देनाभिधीयन्ते। लोक एव वेदिता लौकिकी व्यवहारावगम्या परिगृहीतसंबन्धशब्दनिष्ठेत्यर्थः। तदुक्तं भट्टकुमारिलेन-

निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।
क्रियन्ते सांप्रतं काश्चित् काश्चिन्नैव त्वशक्तितः।। इति।

## (सुबोधिनी)

लक्ष्यार्थेन सह शब्दस्य सम्बन्धविषये शंकते - **नन्विति**। ननु शंकायां, मुख्यार्थे शब्दस्याव्यवहितप्रतीतार्थे, शब्दस्य, संबन्धावधारणात् संबन्धनिश्चयात्, प्रतिपादकत्वं गमकत्वम्, उपपद्यते युज्यते, न तु लाक्षणिके लक्ष्यार्थे तु नेति। तदेव स्पष्टीकर्तुं प्राह- **तथा हीति**। तथाहि तद्यथा, संबन्धावधारणसमये संबन्धनिश्चयकाले, व्यवहर्तृगतयोः वक्तृबोद्धव्ययोः, शब्दप्रयोगार्थप्रतिपत्त्योः शब्दोच्चारणार्थज्ञानयोः, अविभक्तोद्देशवाक्यवाक्यार्थनिष्ठतया अखण्डवाक्यवाक्यार्थत्वात्, पूर्वं प्रथमं, हेतुफलभावावसायो भवति कार्यकारणभावनिश्चयो जायते।

अयमर्थो यदा वक्ता प्रथमं वाक्यमुच्चारयति तदा प्रतिपत्ता पूर्वमखण्डवाक्यवाक्यार्थयोर्मध्ये कार्यकारणभावं निश्चिनोति। **तदनन्तरमि**ति। तदनन्तरं अखण्डवाक्यवाक्यार्थयोर्मध्ये कार्यकारणभावावसायानन्तरं, त्रिचतुरादिदर्शनेभ्यः त्रिचतुर्वारप्रयोगदर्शनात्, अन्वयव्यतिरेकाभ्यां तच्छब्दे उच्चारिते तदर्थावबोधः तदभावे च न तदर्थावबोध इति ज्ञानात्, वाक्यवाक्यार्थोद्देशप्रविभागगते पदपदार्थरूपसखण्डवाक्यवाक्यार्थरूपे, ये शब्दप्रयोगार्थप्रतिपत्ती शब्दोच्चारणार्थज्ञाने (भवतः), तन्निष्ठकार्यकारणावधारणं सखण्डशब्दार्थज्ञानगतकार्यकारणभावनिश्चयो (जायते), तदुत्तरकालञ्च सखण्डशब्दार्थज्ञानगतकार्यकारणभाव-निश्चयात्परं, व्यवहर्तृगतार्थप्रतिपत्त्यन्यथानुपपत्त्या सखण्डपदपदार्थयोः तादृशसंबन्धनिश्चयं विनाऽर्थबोधाभावात्, शब्दार्थसंबन्धावगतिः शब्दार्थयोर्मध्ये संबन्धज्ञानं जायते। अयमर्थः यदा वक्ता वाक्यमुच्चारयति तदा प्रतिपत्ता प्रथमं अखण्डवाक्यवाक्यार्थयोर्मध्ये कारणकार्यभावं निश्चिनोति, परं त्रिचतुर्वारं तादृशप्रयोगं दृष्ट्वा सखण्डवाक्यघटकानां पदानां सखण्डवाक्यार्थघटकपदार्थेष्वन्वयव्यतिरेकसंबन्धमवधारयति, तादृशपदप्रयोगाभावे च तादृशार्थप्रतिपत्त्यभावरूपाऽन्यथानुपपत्तिर्जायत इति पदपदार्थयोर्मध्ये संबन्धावधारणं जायते। **सा चे**ति। सा च शब्दार्थसंबन्धावगतिः, मुख्य एवार्थे जात्यादौ चतुर्विधे जातिगुणक्रियायदृच्छारूपे चतुष्प्रकारे मुख्यार्थे, न तु लाक्षणिके षट्प्रकारे लक्षणायाः षट्प्रकारे लक्ष्यार्थेन सह न शब्दस्य सम्बन्धज्ञानं जायत इत्यर्थः। तदेव वक्ति **न हि लाक्षणिकेनार्थेन सह शब्दस्य संबन्ध** इति स्पष्टम्। **मुख्येनैवे**ति। मुख्यार्थेन सह शब्दस्य संबन्धो वर्तत इति। **तथाभावे** इति। तथाभावे लाक्षणिकार्थेन सहापि शब्दस्य सम्बन्धस्वीकारे, तस्य लक्ष्यार्थस्य, मुख्यत्वमेव स्यान्न लाक्षणिकत्वं लक्ष्यार्थोऽपि मुख्य एव स्यान्न तु लक्ष्य इत्यर्थः।

**अथ शब्दस्येति**। अथेति पुनरपि शंकते, शब्दस्य मुख्यो योऽसावर्थः गवादेः गोत्वजातिरूपार्थः, तेन सह संबन्धो लक्ष्यमाणस्यार्थस्य दृष्टो गोव्यक्तिरूपस्य लक्ष्यार्थस्य गोत्वजातिरूपेण मुख्यार्थेन सह संबन्धः परिलक्षित इति, तद्द्वारेण मुख्यार्थद्वारेण शब्दात् तस्यावगतिः लक्ष्यार्थस्यावगतिरिति चेदभिधीयते, एवं सति मुख्यार्थमाध्यमेन शब्दस्य लक्ष्यार्थप्रतिपादकत्वे सति, यदि निरपेक्षः स्वतन्त्रः सन्, स्वार्थप्रतिपादनद्वारेण वाच्यार्थप्रतिपादनद्वारेण लक्ष्यमाणमर्थमवगमयति, तदा सर्वदा तमर्थमवगमयेत् शब्दः यथा मुख्यार्थमव्यभिचारेण प्रतिपादयति तथा लक्ष्यार्थमपि सदैव प्रकाशयेत्। अथ प्रकारान्तरे, सापेक्षः यदि शब्दः सापेक्षो भूत्वाऽर्थं प्रतिपादयेत् तदा तत्र प्रश्नः समुदेति, किं तस्यापेक्षणीयम् शब्दः किमपेक्ष्य लक्ष्यमाणमर्थं प्रतिपादयेत् ?

इत्याशंक्याह पूर्वपक्षस्य शंकामुत्तरयितुमाह ग्रन्थकारः - **वक्तुर्वाक्यस्येति**। एषा षट्प्रकारा लक्षणा वक्तुः, वाक्यस्य, वाच्यस्य च रूपभेदावधारणात् मनीषिभिर्विवेक्तव्या। अयमर्थः पूर्वोक्ता षट्प्रकारा लक्षणा वक्तृस्वरूपापेक्षया, वाक्यस्वरूपापेक्षया, वाच्यस्वरूपापेक्षया च विद्वद्भिः व्याख्येयेति।

वक्तुर्वाक्यस्येति कारिकाया वृत्तिं प्रतिपादयितुमाह - **यः परप्रतिपत्तये** इति। यः वक्ता, परप्रतिपत्तये परस्य स्वभिन्नस्य, प्रतिपत्तये ज्ञानाय, वाक्यं साकांक्षैकार्थात्मकपदसमूहम्, उच्चारयति वदति, स वक्तेति स्पष्टम्। **शब्देनेति**। शब्देन प्रतिपादकेन, मुख्यं निरन्तरार्थविषयं, लाक्षणिकं वा सान्तरार्थनिष्ठं वा, अभिधाव्यापारमाश्रित्य अभिधावृत्तिमाश्रित्य, यद्गोचरीक्रियते यत् प्रत्याय्यते, तद्वाच्यमिति स्पष्टम्। एतेषां त्रयाणां वक्त्रादीनां वक्तृवाक्यवाच्यानां, व्यस्तसमस्तभेदभिन्नानां निरपेक्षसापेक्षभेदैः भिन्नस्वरूपाणां, देशकालावस्थावैलक्षण्यगतसमस्तव्यस्तभेदसंयोजितानां देशगतानि

कालगतान्यवस्थागतानि च यानि वैलक्षण्यानि तेषां समस्ताः अन्योऽन्यसापेक्षत्वेन मिलिता, व्यस्ता अन्योऽन्यनिरपेक्षत्वेन भिन्ना ये भेदास्तैः संयोजितानां तैर्युक्तानां, यः स्वभावभेदप्रपञ्चो यो स्वाभाविकभेदसमुदायः, ततः तद्भेदप्रपञ्चयुक्तत्वात्, एषा षट्प्रकारा लक्षणा पूर्वोक्ता, परामर्शकुशलैः विज्ञैरित्यर्थो, विवेचनीया व्युत्पाद्या। कारणं दर्शयति **तथाविधे**ति। तथाविधवक्त्रादिसामग्र्यपेक्षयैव तादृशवक्त्रादिसाधनद्वारैव, स्वार्थमवगमयतां शब्दानां स्वार्थप्रतिपादकानां शब्दानां, स्वार्थद्वारेण निजवाच्यार्थद्वारा, लक्ष्यमाणार्थसम्बन्धस्य लक्ष्यार्थमुख्यार्थयोः सम्बन्धस्य, वृद्धव्यवहारेण प्राचीनाचार्यपरम्परया, अवधारितत्वात् निश्चितत्वात्। अयमर्थो ये खलु शब्दाः निजवाच्यार्थद्वारा लक्ष्यार्थमवगमयन्ति तत्र वाच्य-लक्ष्ययोर्मध्ये यः सम्बन्धः स हि वक्त्रादिसामग्र्यपेक्षयैवेति प्राचीनाचार्यपरम्पराया मान्यता। तत्र वाच्यलक्ष्ययोः सम्बन्धे हेतुं प्रतिपादयितुमाह **एतदुक्त**मिति। अनवधारितलाक्षणिकार्थसम्बन्धानां अनवधारितः अनिश्चितः लाक्षणिकार्थेन सह सम्बन्धो येषां ते तेषां लाक्षणिकार्थेन सह सम्बन्धनिश्चयाभावात्, शब्दानां प्रतिपादकानां, लाक्षणिकमर्थं प्रति लक्ष्यार्थं प्रति, न गमकत्वं न प्रत्यायकत्वम्, नापि च तत्र साक्षात्सम्बन्धग्रहणं प्रतिपादकशब्दलक्ष्यार्थयोर्मध्ये न साक्षात्संबन्धः, किं तर्हि कथं तेषां लक्ष्यार्थं प्रति गमकत्वं सिद्ध्येत ? वक्त्रादिसामग्र्यपेक्षया स्वार्थव्यवधानेनेति वाच्यार्थव्यवधानपूर्वकं वक्त्रादिसामग्र्यपेक्षया तेषां शब्दानां लक्ष्यार्थं प्रति गमकत्वम्। तत्र प्राचीनाचार्याणां प्रमाणं दर्शयितुमाह **यदुक्त**मिति। आचार्यशबरस्वामिना मीमांसादर्शने (१.४.१२ इत्यत्र) यदुक्तम् - परः शब्दः अन्यः शब्दः, परत्र अन्यार्थे,कथं पुनः वर्त्तते केन प्रकारेण संबद्ध्यते ? स्वार्थाभिधानेनेति ब्रूमः स्वार्थप्रतिपादनेनेति वदामः इति। तन्मतस्याशयं प्रतिपादयितुमाह **अत्र ही**ति। अत्र हि शब्दानां गमकत्वसिद्धौ, स्वार्थद्वारेण वाच्यार्थद्वारा, लक्ष्यमाणार्थाभिनिवेशितोक्ता

लक्ष्यमाणार्थेन सह सम्बद्धता प्रतिपादिता। पुनरपि तस्यैव मतं (मीमांसादर्शने १.४.१ इत्यत्रोक्तं) प्रतिपादयति **पुनश्चासावेवाहे**ति। लक्षणापि लौकिकी एव लौकिकप्रमाणाधारेण हि लक्षणा प्रयुज्यते। **अत्र ही**ति। सम्बन्धनिश्चयमपेक्ष्य लक्ष्यार्थं प्रति शब्दानां गमकत्वम्। लक्षणाया लौकिकत्वं साधयितुमाह **व्यवहारोपारूढानी**ति। व्यवहारोपारूढानि व्यवहारे प्रयुक्तानि प्रत्यक्षादीनि प्रमाणानि (ग्रन्थादावेवास्माभिः १मे २ये च पृष्ठांके प्रमाणस्वरूपं भेदाश्च प्रतिपादिताः) लोकशब्देनाभिधीयन्ते लोकपदेनोच्यन्ते। किं नाम लोकिकीति प्राह **लोक एवे**ति। लोके एव विदिता ज्ञाता लौकिकी, व्यवहारगम्या व्यवहारे प्रयुज्या, परिगृहीतसंबन्धशब्दनिष्ठा परिगृहीतसंबन्धत्वं शब्दनिष्ठत्वं च यस्याः स्वीकृतसंबन्धशब्दस्वरूपा। पुनरपि प्राचीनोक्तं प्रमाणत्वेनोपन्यस्यति **तदुक्त**मिति। कुमारिलभट्टेनावादि (तन्त्रवार्तिके ३.१.६ अरुणाधिकरणे) **निरूढे**ति। काश्चित् निरूढा लक्षणाः सामर्थ्यादभिधानवत् क्रियन्ते, काश्चित् सांप्रतं क्रियन्ते, काश्चिच्चाशक्तितः नैव क्रियन्ते इत्यन्वयः। काश्चिल्लक्षणाः कर्मणि कुशलः, राजा इत्यादौ निरूढाः लक्षणाः सामर्थ्यात् शब्दानां सामर्थ्यवशेन अभिधानवत् निरन्तरार्थनिष्ठव्यापारवत् शब्दश्रवणानन्तरं लक्ष्यार्थप्रतीतेः कारणात्, क्रियन्ते विधीयन्ते। काश्चिच्च लक्षणाः, सांप्रतं प्रयोगमनुसृत्य वृद्धव्यवहाराद्वा, क्रियन्ते। काश्चिच्च लक्षणाः, अशक्तितः शक्त्याभावात् अर्थप्रत्यायनसामार्थ्याभावात्, नैव क्रियन्ते नैव विधीयन्ते। आचार्यमम्मटानुसारं द्विविधा लक्षणा प्रचलन्ती अस्ति रूढिमूला प्रयोजनमूला चेति। तृतीया तु रूढिप्रयोजनमनादृत्य क्रियमाणा लक्षणाऽशक्तिकृतेत्युच्यते, तत्र च नेयार्थतादोषकारणात् तादृशी लक्षणा परिहेया। तथा हि “शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम्। करोति ते मुखं तन्वि चपेटापातनातिथिम्।।” इत्यत्र पूर्णचन्द्रस्य यन्निर्जितत्वं लक्ष्यत्वेनोपन्यस्तं तद्रूढिप्रयोजनमनादृत्य विहितमिति अशक्तिकृतम्।

अत एव परिहेयमित्यर्थः।

(सङ्क्रमनी)

शब्द का लाक्षणिक अर्थ के साथ संबन्ध को बताने के लिए कहते हैं- **ननु मुख्यार्थे शब्दस्य** इत्यादि। एक प्रश्न उठता है कि मुख्यार्थ के साथ शब्द का संबन्ध होने से शब्द मुख्यार्थ का प्रतिपादक हो सकता है, परन्तु लाक्षणिक अर्थ का नहीं, क्यों कि उस के साथ शब्द का संबन्ध नहीं होता है। क्योंकि शब्द और अर्थ के बीच संबन्ध-ज्ञान के लिए तीन सोपान की आवश्यकता है, जैसे कि- (१) व्यक्ति के शब्द को दो व्यवहर्ताओं अर्थात् वक्ता एवं बोद्धव्य (श्रोता / प्रतिपत्ता) के शब्दव्यवहार को सुन कर शब्द-प्रयोग और अर्थ-ज्ञान के बीच भेदप्रतीति के बिना ही कार्य-कारण भाव का बोध होता है। अर्थात् उसे वाक्य-वाक्यार्थ का पृथक् पृथक् बोध नहीं होता है। (२) तदनन्तर वह तीन चार बार वैसी ही स्थिति का साक्षात्कार होने पर अन्वय एवं व्यतिरेक द्वारा वाक्य एवं वाक्यार्थ में उद्देश्य-विधेयभाव के प्रविभाग के बोध के लिए शब्द-प्रयोग एवं अर्थबोध का तथा उनके बीच कार्यकारणभाव का अवधारण प्राप्त करता है। (३) उसके बाद क्योंकि अर्थ-प्रतीति शब्दार्थ-संबन्ध-ज्ञान के बिना नहीं हो सकती, इस आधार पर वह शब्द और अर्थ के बीच संबन्ध का ज्ञान प्राप्त करता है। वह शब्दार्थ-संबन्ध-ज्ञान जाति, गुण, क्रिया और यदृच्छा रूप चार मुख्य अर्थ में ही होता है, न कि छः प्रकार के लाक्षणिक अर्थ में भी। शब्द एवं लाक्षणिक अर्थ के बीच संबन्ध नहीं दिखता है, जिस प्रकार शब्द एवं मुख्य अर्थ के बीच। वैसा न होने पर अर्थात् लाक्षणिक अर्थ के साथ शब्द का संबन्ध दिखने पर लाक्षणिक अर्थ भी मुख्य अर्थ कहलाएगा, न कि लाक्षणिक।

यदि यह कहा जाय कि शब्द का जो मुख्य अर्थ है, उसके साथ लक्ष्यमाण अर्थ का संबन्ध दिखता है, उसके माध्यम से शब्द से लक्ष्यमाण अर्थ की प्रतीति होती है, ऐसा कहा जाय, तो उस स्थिति में यदि शब्द निरपेक्ष रहकर स्वार्थ (मुख्यार्थ) के प्रतिपादन के द्वारा लक्ष्यमाण अर्थ को बोधित करता है, तब सदा ही शब्द उस अर्थ (लक्ष्यमाण अर्थ) की प्रतीति

करानी चहिए। यदि यह कहा जाए कि शब्द किसी की अपेक्षा से लाक्षणिक अर्थ की प्रतीति कराता तो, यह प्रश्न उठता है कि किसकी अपेक्षा से? उस का उत्तर निम्न कारिका में दिया गया है-.

**(कारिका)** वक्ता, वाक्य एवं वाच्य के स्वरूप एवं भेदों के निश्चय से यह छः प्रकार की लक्षणा का विवेचन मनीषिओं ने किया है।

कारिका का अर्थ का व्याख्यान करते हैं- जो अन्य के ज्ञान के लिए वाक्य का उच्चारण करता है वह वक्ता है। परस्पर साकांक्ष एक अर्थ बोधक पदों का समूह वाक्य कहलाता है। शब्द जब मुख्य या लाक्षणिक अभिधाव्यापार के द्वारा जिस अर्थ को बताता है वह वाच्य है। इन तीनों का (वक्ता, वाच्य एवं वाक्य का) व्यस्त रूप से अर्थात् अन्य निरपेक्ष रूप से, एवं समस्त रूप से अर्थात् अन्य सापेक्ष रूप से देशगत, कालगत एवं अवस्थागत विशिष्टता के आधार पर समस्त (इतर-सापेक्ष) एवं व्यस्त (इतर-निरपेक्ष) रूप से हुए भेदों के संयोजन से जो स्वभाव गत भेदों का विस्तार बनता है, उस से यह छः प्रकार की लक्षणा का विवेचन परामर्श देने में कुशल विद्वानों के द्वारा किया जाता है। उस प्रकार की वक्ता आदि सामग्री की अपेक्षा से ही अपने अर्थों को बताने वाले शब्दों के स्वार्थों के द्वारा लक्ष्यमाण अर्थ के साथ संबन्ध वृद्ध-व्यवहार से निश्चित होता है। इसीलिए कहा गया है जिन शब्दों के लाक्षणिक अर्थ के साथ संबन्ध निर्धारित नहीं होता है, उन का लाक्षणिक अर्थ के प्रति गमकत्व सिद्ध नहीं हो सकता है, शब्द का लाक्षणिक अर्थ के साथ साक्षात् संबन्ध-ग्रहण भी संभव नहीं है। तो फिर कैसे शब्द का लक्ष्यमाण अर्थ के प्रति गमकत्व सिद्ध होगा? उत्तर यह कि- वक्ता आदि सामग्री की अपेक्षा से मुख्यार्थ के व्यवधान से शब्द का लक्ष्यमाण अर्थ के साथ संबन्ध हो सकता है। जैसे कि आचार्य शबरस्वामी ने कहा है- "कैसे अन्य शब्द अन्य अर्थ का गमक होता है? उत्तर है कि स्वार्थ के अभिधान के द्वारा।"। यहाँ शब्द का लक्ष्यमाण अर्थ के साथ संबन्ध स्वार्थ के द्वारा होती है यह कहा गया है। फिर उन्होंने ही कहा है- लक्षणा भी लौकिकी ही है। यहाँ संबन्ध के निश्चय की अपेक्षा रखनेवाले शब्दों की लक्ष्यमाण अर्थ में प्रवृत्ति होती है। अर्थात् शब्दों की

लक्ष्यमाण अर्थ की ओर प्रवृत्ति किसी न किसी संबन्ध के निश्चय से ही होता है।व्यवहार में आये हुए प्रत्यक्ष आदि प्रमाण लोक शब्द से कहे जाते हैं। लोक में ही समझी जाने वाली और लोक-व्यवहार में लायी जाने वाली वस्तु या अभिव्यक्ति या प्रतीति लौकिकी होती है। अर्थात् जिस का शब्द के साथ संबन्ध स्वीकृत होता है वह लौकिकी प्रतीति ही लक्षणा है। इसीलिए कुमारिल भट्ट ने कहा है-

**(कारिका)** कुछ लक्षणायें अभिधाव्यापर की तरह होती हैं (जैसे अभिधा व्यापार शब्दश्रवण से ही अर्थप्रतीति कराती है उसी प्रकार जहाँ लाक्षणिक शब्द लक्ष्यार्थ में रूढ हैं और शब्द के श्रवण से ही अविलम्ब लक्ष्यार्थ का प्रतिपादन करें जिससे ऐसा प्रतीत हो कि वाचक शब्द और लक्ष्य अर्थ के बीच वाच्य अर्थ व्यवधान में न आता हो।) उसे निरूढा लक्षणा कहा जाता है। कुछ लक्षणायें सांप्रतं अर्थात् लाक्षणिक प्रयोगों के आधार पर या वृद्ध-व्यवहार के आधार पर की जाती हैं। कुछ लक्षणाएं अशक्ति-कृत प्रयुक्त होने के कारण वर्जित या निषिद्ध हैं। अर्थात् जहाँ लक्षणा का क्षेत्र (मुख्यार्थबाध, लक्ष्यार्थ का वाच्यार्थ के साथ संबन्ध और रूढि या प्रयोजन में से किसी एक का सद्भाव- इन तीन कारणों के न होने पर भी बलवत्तर लाक्षणिक प्रयोग किये जाने पर अशक्ति-कृत लक्षणा कही जाती है।

(मातृका)

{निरूढा लक्षणा वृद्धव्यवहारे दृष्टा लक्षणा च}

**तत्र निरूढा लक्षणा राजेत्यादिकाः। सांप्रतं क्रियन्ते या वृद्धव्यवहारवक्त्राद्यपेक्षया तथाविधेऽन्यत्र विषये परिदृष्टस्वभावाः। यथा**

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना**
**वाताः सीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**
**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे।**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव।। इति।**

**अत्र हि लिप्तशब्दः कान्तेः कुङ्कुमादिवल्लेपनसाधनत्वाभावाद् बाधितमुख्यार्थः, अतस्तेन स्वार्थगतो योऽसावीषत्तीरोधीयमानत्वादिधर्मः प्रतिपादितः तत्सदृशेषत्तिरोधीयमानत्वादिधर्मयोगात् कान्तिसंपृक्तोऽर्थो लक्ष्यते। एवं सुहृच्छब्देनापि पयोदानामचेतनत्वेन मैत्रीसंबन्धभावान्मुख्यशब्दार्थबाधे सति सुहृद्गता ये ते ते सांमुख्यादयो धर्माः तत्सदृशसांमुख्यादिधर्मयोगतः पयोदाभिमुखा मयूरा लक्ष्यन्ते। रामशब्दस्यापि प्रतिपन्नत्वात् संज्ञिनो मुख्यशब्दार्थबाधः। अतस्तेनापि राज्यभ्रंशवनवाससीतापनयन-पितृमरणादयः स्वाभिधेयभूतार्थैकगामिनोऽसाधारणदुःखहेतवो धर्मा विशिष्टसामग्र्यनुप्रविष्टेन लक्षिताः। तत्, एवमादीनां लक्षणानां सांप्रतं क्रियमाणता।**

## (सुबोधिनी)

निरूढां लक्षणामुदाहर्तुमाह **तत्र निरूढेति**। राजा इत्यादिकाः निरूढा लक्षणाः राजेतरेऽपि शूद्रादौ राजगतजनपदपरिपालनसदृश-गुणयोगलक्षणयुक्तत्वात् राजा इति शब्दः प्रयुज्यते। सांप्रतं क्रियमाणां लक्षणामुदाहर्तुमाह **सांप्रतं क्रियन्ते या** इत्यादि। या लक्षणा, वृद्धव्यवहारवक्त्राद्यपेक्षया वृद्धव्यवहारस्य वक्त्रादेश्च याऽपेक्षा तया, तथाविधेऽन्यत्र विषये तादृशे विषयान्तरे काव्यशास्त्रादौ लोके वा, परिदृष्टस्वभावाः परिलक्षितस्वरूपाः, सांप्रतं क्रियन्ते सांप्रतं विधीयन्ते।

**स्निग्धश्यामलेति**। स्निग्धा मसृणा श्यामला नीला च या कान्तिस्तया लिप्तमाच्छादितं वियद्गगनं यैस्तादृशाः, वेल्लन्त्यः प्रमदभरेण सविलासं स्फुरन्त्यो बलाका वकपंक्तयो येषु, तादृशा घना मेघाः, शीकरिणो वृष्टिसंपर्केण जललवभृतो, वाता वायवः, पयोदः सुहृद् येषां ते पयोदसुहृदस्तेषां, यद्वा पयोदस्य मेघस्य सुहृदां मित्राणां,

केकाशब्दसमासत्त्या केकिनां कला अस्फुटमधुराः, आनन्दकेकाः प्रमोदजमयूरध्वनयः, कामं यथेच्छं, सन्तु समुज्जृम्भन्ताम् (निर्भयेनेत्यर्थः), दृढमत्यन्तं कठोरहृदयः कर्कशमनाः, रामो दाशरथिर्दुःखसहनैकस्वभावप्रसिद्धः, अस्मि। सर्वं मेघाद्युद्दीपनकृताखिलदुःखं, सहे मर्षयामि। वैदेही विदेहराजदुहिता सीता, तु पुनः, कथं भविष्यति केन प्रकारेण जीविष्यति? इत्याद्यर्थजातं विमृश्य भावनया प्रत्यक्ष्यीक्रियमाणां वैदेहीं सद्यो मरणोन्मुखीं सम्भाव्याश्वासयति ह हहा देवि सीते! धीरा भव धैर्यं धारय।

श्लोकेस्मिन् लक्षणां घटयितुमाह - **अत्र हि लिप्तशब्दः** इत्यादि। अत्र हि स्निग्धश्यामलेत्यत्र, लिप्तशब्दः, कान्तेः श्यामलवर्णस्य, कुङ्कुमादिवत् कुङ्कुमादिपदार्था इव, लेपनसाधनत्वाभावात् लेपनक्रियासंपादकपदार्थत्वाभावात्, बाधितमुख्यार्थः बाधितः मुख्यार्थः यस्याऽसौ अनुपपन्नवाच्यार्थः, अतस्तेन मुख्यार्थेन, स्वार्थगतो वाच्यार्थगतो, योऽसावीषत्तिरोधीयमानत्वादिधर्मः ईषदप्रकाश्यमानत्वादिगुणः,प्रतिपादित उक्तः, तत्सदृशेषत्तिरोधीयमानत्वादिधर्मयोगात् तत्समेषदप्रकाश्यमानत्वादि-गुणसंबन्धात्, कान्तिसंपृक्तोऽर्थो लक्ष्यते आकाशस्य कान्तियुक्तत्वार्थो लक्षणया प्रतीयते। **एवं सुहृच्छब्देनापी**ति। एवं पूर्ववत्, सुहृच्छब्देनापि सुहृच्छब्दद्वाराऽपि, पयोदानां मेघानाम्, अचेतनत्वेन जडत्वात्, मैत्रीसंबन्धाभावात् मैत्रीसंबन्धस्याप्रयोजकत्वात्, मुख्यशब्दार्थबाधे वाच्यार्थानुपपन्ने, सति, सुहृद्गता मित्रगता ये ते सांमुख्यादयो धर्मा आभिमुख्यसंपादका गुणाः, तत्सदृससांमुख्यादिधर्मयोगतः तद्वत्सांमुख्यादिगुणैः सह संबन्धात्, पयोदाभिमुखा मेघाभिमुखा, मयूराः शिखिनो, लक्ष्यन्ते लक्षणया प्रतिपाद्यन्ते। अयमर्थो यत् मेघानामचेतनत्वेन मयूराणां तैः सह मित्रत्वं नैव संभवमिति मेघैः सह सांमुख्यादिधर्मयुक्ता मयूरा इति लक्षणया प्रतीयते। **रामशब्दस्यापी**ति। रामशब्दस्यापि

प्रतिपन्नत्वात् रामशब्दार्थस्य दशरथपुत्रत्वेन सर्वविदितत्वात्, संज्ञिनः दशरथपुत्रस्य, मुख्यशब्दार्थबाधः वाच्यार्थोऽनुपपन्नः। **अतस्तेनापी**ति। अतः अस्मात्कारणात् मुख्यार्थबाधकारणादित्यर्थः, तेनापि रामशब्देनापि, राज्यभ्रंश-वनवास-सीतापनयन-पितृमरणादयो राज्यापगमारण्यवास-वैदेहीहरणजनकमरणादयो धर्माः, स्वाभिधेयभूतार्थैकगामिनो निजवाच्यार्थमात्रसहचराः, असाधारणदुःखहेतवो धर्मा असामान्यदुःकाररका गुणाः, विशिष्टसामग्र्यनुप्रविष्टेन विशिष्टा याः सामग्र्यः साधनानि संदर्भा वा तासामनुप्रविष्टेन पश्चात् प्रवेशेन, लक्षिताः लक्षणया प्रतीताः। तत् तस्मात्, एवमादीनां पूर्वोक्तानां लिप्त-सुहृत्-रामशब्दानां, लक्षणानां लाक्षणिकशब्दानां, सांप्रतं क्रियमाणता वृद्धव्यवहारवक्त्रादिव्यपेक्षया संप्रति विधीयमानता। अर्थात् लिप्त-सुहृत्-रामशब्दा यद्यपि ईषत्तिरोहीयमानसांमुख्याधानदुःखसहिष्णुत्व-धर्मप्रयोजकत्वाद्यर्थेषु नैव रूढास्तथापि वक्तृप्रकरणादि-सामग्र्यनुसंधानद्वारा तत्तल्लक्ष्यार्थं प्रतिपादयन्तीति तासां लक्षणानां सांप्रतं क्रियमाणता।

## (सङ्क्रमनी)

निरूढा लक्षणा एवं सांप्रतं क्रियमाणा लक्षणा को सोदाहरण बतलाने हेतु कहते हैं- **तत्र निरूढा लक्षणा** इत्यादि। निरूढा लक्षणा का उदाहरण राजा इत्यादि। शूद्रादि राजकर्मचारिओं में जब राजा के नगरपरिपालन रूप गुण के संबन्ध को देख कर राजा शब्द का प्रयोग होता है तब बाधप्रतीति के बिना ही अर्थ बोध हो जाता है। अतः उसे निरूढा लक्षणा कहा जाता है। वक्ता आदि की अपेक्षा से वृद्धव्यवहार अर्थात् परंपरा में प्रयुक्त लक्षणा या उस प्रकार अन्य विषय जैसे कि काव्यशास्त्र या लोक में दिखने वाली लक्षणा को सांप्रतं क्रियमाणा लक्षणा कहा जाता है। जिस का उदाहरण है- स्निग्धश्यामल इत्यादि श्लोक है। जिस का अर्थ है-

(सीता से वियुक्त रामचन्द्र बोल रहे हैं) भले ही उडते हुए बगुलों

की पंक्तिओं से युक्त, सरस एवं श्यामल कान्ति वाले मेघ आकाश को लेप रहे हों (आच्छादित कर रहे हों) शीतल पवन वह रहा हो, मेघों के मित्र मयूरों के आनन्दपूर्ण केका-ध्वनि दिगन्त को मुखरित कर रही हों; किन्तु मैं तो अत्यन्त कठोर हृदय वाला राम हूँ, सब कुछ सह रहा हूँ। परन्तु सीता का क्या हाल हो रहा होगा ? हा देवि ! सीते ! तुम धीरज धरो।

यहाँ श्यामल कांति कुंकुम आदि के समान लेपन का साधन नहीं हो सकती अतः लिप्तपद का मुख्य अर्थ वाक्य में बाधित (असंगत) हो जाता है। इसीलिए उसके द्वारा लिप्त (लिपे हुए) अर्थ में विद्यमान कुछ छिपने आदि का धर्म जो कथित हो रहा है, उसके समान कुछ छिपने आदि धर्म के संबन्ध के कारण कांति से संपृक्त इस अर्थ की लक्षणा द्वारा प्रतीति होती है। इसी प्रकार की स्थिति सुहृत् शब्द में भी है। जैसे कि बादल अचेतन होते हैं, अतः उनमें मैत्री भाव का होना संभव नहीं, परिणाम स्वरूप सुहृत् शब्द का मुख्यार्थ बाधित होता है, जिस के फलस्वरूप सुहृत् में रहने वाले सांमुख्य आदि धर्मों के सदृश सांमुख्य आदि धर्मों से युक्त मयूर अर्थ की प्रतीति लक्षणा द्वारा होती है। संज्ञी राम स्वयं वक्ता होने के कारण राम शब्द का अर्थ भी बाधित हो रहा है। फलतः राम पद के अर्थ राम व्यक्ति में विद्यमान राज्यभ्रंश, वनवास, सीता का अपहरण, पिता की मृत्यु आदि असाधारण दुःखों के सहिष्णुत्व रूप धर्म से विशिष्ट सामग्री से युक्त राम व्यक्ति का लक्षणा द्वारा बोध होता है। इस प्रकार लिप्त, सुहृत्, राम आदि लाक्षणिक शब्दों में प्रयुक्त लक्षणा को सांप्रतं क्रियमाणा लक्षणा कहा जाता है। क्यों कि इन शब्दों का उन उन लाक्षणिक अर्थों में प्रयोग, परंपरा में प्रचलित है।

## (मातृका)

### {अशक्तिकृता लक्षणा}

**यासां तु लक्षणानां न वृद्धव्यवहारे दृष्टता, न च तस्मिन् शब्दे राजशब्दवद् दर्शनम्, नापि च तज्जातीयेषु शब्दान्तरेषु**

लिप्तादिशब्दवत्, तासामशक्यत्वादक्रियमाणत्वमेव। यथा-

मध्ये समुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनभूमिभासा।
तुरंगकान्ताननहव्यवाहज्वालेव भित्त्वा जलमुल्ललास।।

अत्र हि तुरङ्गकान्ताननहव्यवाहशब्दो वडवामुखाग्नौ लक्षणया प्रयुक्तः। न चासौ वडवामुखाग्नौ निरूढः, नापि च तज्जातीयः शब्दो विशिष्टसामग्र्यनुप्रविष्टतया विद्धाविद्धार्थावगाहित्वेन परिदृष्टः।

ननु द्विरेफादीनां शब्दानां रेफद्वितयानुगतभ्रमरादिशब्द-लक्षणाद्वारेण यथा षट्पदादौ प्रवृत्तिः, तथा तुरङ्गकान्ताननहव्यवाहशब्दस्यापि वडवामुखाग्नौ वडवादिशब्दलक्षणाद्वारेण कथं प्रवृत्तिर्न स्यात्, तज्जातीये द्विरेफादौ शब्दलक्षणायाः परिदृष्टत्वात्।

नैतत्, यतो वृद्धव्यवहाराभ्यनुज्ञातेष्वेव शब्देषु तज्जातीयशब्ददर्शनात् लक्षणात्वमभ्युपगम्यते, न तु सर्वत्र। अन्यथा सर्वेषामेव शब्दानां येन केनचिज्जातिलेशेन सर्वानर्थान् प्रति लक्षणाशब्दत्वस्य वक्तुं शक्यत्वात् न कश्चिच्छब्दः कञ्चिदर्थं प्रत्यगमकः स्यात्। वृद्धव्यवहाराभ्यनुज्ञानानभ्यनुज्ञानाभ्यां तु विषयविभागे क्रियमाणे तुरङ्गकान्ताननहव्यवाहेत्यादीनामसति प्रयोजने दुष्टत्वमेव, सति तु गुप्तार्थप्रतिपादनादिप्रयोजनसंभवे एवंविधानामपि लक्षणानामदुष्टत्वम्। तथाविधविषये वृद्धव्यवहारेण तासामभ्यनुज्ञातत्वात्।

तदेवं वक्त्रादिसामग्र्यनुप्रवेशेन शब्दानां स्वार्थमर्पयतामर्थान्तरं प्रति वृद्धव्यवहारे स्वरूपद्वारेण सजातीयशब्दद्वारेण वा गमकतयावधारितानां लक्षकत्वमिति स्थितम्।

(सुबोधिनी)

**यासां तु लक्षणानामित्या**दि। यासां तु लक्षणानां लाक्षणिकप्रयोगानामित्यर्थः, न वृद्धव्यवहारे दृष्टता परंपरायां लक्ष्यत्वाभावः, न च तस्मिन् शब्दे लाक्षणिके इत्यर्थः, राजशब्दवद् दर्शनं यथा राजा इत्यत्र राजेतरेऽपि शूद्रादौ जनपदरक्षणादिराजसदृशगुणयोगाद् राजा इति शब्दप्रयोगः, नापि च तज्जातीयेषु शब्दान्तरेषु ईषत्तिरोहीयमानत्वादितत्तदर्थप्रतिपादकेषु शब्देषु लिप्तादिशब्दवत् सांप्रतं क्रियमाणत्वं दृश्यते, तासां लाक्षणिकप्रयोगानाम्, अशक्यत्वात् असम्भवत्वात्, अक्रियमाणत्वमेव अशक्तिकृतत्वात् नैव करणीयत्वमित्यर्थः। तदेवोदाह्रियते **यथे**ति -

**मध्ये समुद्र**मिति। या मध्येसमुद्रं काञ्चनभूमिभासा ककुभः पिशङ्गीः कुर्वती तुरङ्गकान्ताननहव्यवाहज्वालेव जलं भित्त्वा उल्ललासेत्यन्वयः। द्वारकापुरीवर्णनात्मकश्लोकोऽयं[११] माघकृतस्य शिशुपालबधमहाकाव्यस्य तृतीयसर्गस्थः त्रयस्त्रिंशत्तमः। या द्वारकापुरी, मध्येसमुद्रं समुद्रमध्ये पारे मध्ये षष्ठ्या वा (अष्टाध्यायी २.१.१८) इति विकल्पादव्ययीभावः काञ्चनभूमिभासा काञ्चनकृता भूमिस्तस्या भाः कान्तिस्तया स्वर्णभूमिकान्त्या, ककुभः दिशः, पिशङ्गीः पीतरक्तवर्णाः, कुर्वती विदधती, तुरङ्गकान्ताननहव्यवाहज्वालेव तुरङ्गस्य अश्वस्य कान्ता वडवेति समुद्रान्तः विद्यमानाग्निरित्यर्थः तुरङ्गकान्ताया वडवाया आननहव्यवाहो मुखाग्निः तज्ज्वालेव तत्प्रकाश इव वडवामुखाग्निप्रकाशवदित्यर्थः, जलं भित्त्वा उल्ललास पयो

---

११. शिशुपालबधे चौखम्बाविद्याभवन-वाराणसा-पक्षतः १९८४ तमेशवीयवर्षे प्रकाशिते संस्करणे श्लोकोऽयमित्थं प्राप्यते -

मध्ये समुद्रं ककुभः पिशङ्गीर्या कुर्वती काञ्चनवप्रभासा।
तुरंगकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललास।।

विभिद्योद्गतः । समुद्रान्तः विद्यमाना द्वारकापुरी स्वकाञ्चनभूमितेजसा दिशः पिशङ्गीकुर्वती सती एवं प्रतीयते स्म यथा समुद्रान्तः विद्यमानस्य वडवाग्नेः ज्वाला पयो विभिद्योपर्यागतेत्यर्थः । उत्प्रेक्षालंकारः ।

**अत्र ही**ति । अत्र हि मध्येसमुद्रमित्यत्र, तुरङ्गकान्ताननहव्यवाहशब्दः वडवामुखाग्नौ समुद्रान्तःस्थवडवामुखवह्नौ, लक्षणया लक्षणाव्यापारेण, प्रयुक्तः । **न चासावि**ति । असौ तुरङ्गकान्ताननहव्यवाहशब्दः, वडवामुखाग्नौ समुद्रान्तःस्थ-वडवामुखवह्नौ, न निरूढः, नापि तज्जातीयः शब्दः लक्ष्यार्थजातीयः वाचकः शब्दः, विशिष्टसामग्र्यनुप्रविष्टतया विशिष्टा या सामग्री तया योऽनुप्रविष्टस्तस्य भावस्तया विशिष्टार्थयुक्तत्वेन, विद्धश्चाऽविद्धश्चेति विद्धाऽविद्धौ संबद्धासंबद्धौ यावर्थौ तावगाहेतेऽन्तःप्रविशतोऽस्मिन्निति । अयमर्थो यत् तुरङ्गकान्ताननहव्यवाहशब्दः न रूढ्या वडवामुखाग्निरूपार्थं बोधयति न वा लक्ष्यार्थगतगुणसाजात्येन क्वचित् संबद्धो भूत्वा क्वचिच्चासंबद्धो भूत्वा तदर्थप्रतिपादकत्वेन परिदृष्टः । अत एव नात्र लक्षणा स्वीकार्या ।

पूर्वपक्षशंकामुपस्थापयति **नन्वि**त्यादिना । द्विरेफादीनां शब्दानां रेफद्वितयानुगतभ्रमरादिशब्दलक्षणाद्वारेण रेफद्वितयेनानुगतो यो भ्रमरादिशब्दस्तत्र प्रयुक्ता या लक्षणा तद्द्वारा यथा षट्पदादौ मधुकरादावर्थे प्रवृत्तिर्लाक्षणिकव्यवहारस्तथा तद्वत् तुरङ्गकान्ताननहव्यवाहशब्दस्यापि वडवादिशब्दे प्रयुक्ता या लक्षणा तद्द्वारा वडवामुखाग्नौ वडवाननवह्नौ कथं प्रवृत्तिर्न स्यात् लक्षणाप्रयोगः कथं न स्यादित्यर्थः ? तज्जातीये तत्सामान्ये, द्विरेफादौ द्विरेफादौ शब्दे, शब्दलक्षणायाः लाक्षणिकशब्दस्य, परिदृष्टत्वात् प्राप्तत्वात् । अयमर्थः यथा रेफद्वितययोगित्वधर्मसंबन्धेन भ्रमरार्थे द्विरेफशब्दस्य लाक्षणिकप्रयोगस्तथा वाडवाशब्दयोगित्वधर्मसंबन्धेन वाडवामुखाग्न्यर्थे तुरङ्गकान्ताननहव्यवाहशब्दस्यापि लक्षणिकप्रयोगः कथं न संगच्छते

इति प्रश्नः ?

तुरङ्गकान्ताननहव्यवाह इत्यत्र द्विरेफादिवल्लाक्षणिकप्रयोगं निवारयितुमाह **नैतदिति**। एतत् न तुरङ्गकान्ताननहव्यवाह इत्यादि प्रयोगजातं न लाक्षणिकं, यतो यस्मात्, वृद्धव्यवहाराभ्यनुज्ञातेष्वेव वृद्धव्यवहारेषु परिदृष्टेष्वेव शब्देषु द्विरेफादिषु, तज्जातीयशब्ददर्शनात् लाक्षणिकजातीयशब्दानां प्रयोगप्राप्तेः, लक्षणात्वमभ्युपगम्यते लक्षणात्वं स्वीक्रियते, न तु सर्वत्र वृद्धव्यवहारेऽपरिदृष्टेषु शब्देषु न लक्षणेत्यर्थः। अन्यथा तादृशनियमाभावे, सर्वानर्थान् प्रति येन केनचिज्जातिलेशेन सर्वैरप्यर्थैः सह येन केनचित्सम्बन्धेन, लक्षणाशब्दत्वं वक्तुं शक्यत्वात् सर्वेषामपि शब्दानां लाक्षणिकशब्दत्वेन स्वीकारसंभवात्, न कश्चिच्छब्दः कश्चिदर्थं प्रत्यगमकः स्यात् सर्वे शब्दाः सर्वार्थवाचकाः स्युरित्यर्थः। तदेव नियमयति **वृद्धव्यवहारे**त्यादिना। वृद्धव्यवहाराभ्यनुज्ञानानभ्यनुज्ञानाभ्यां वृद्धव्यवहारेषु परिदृश्यमानाऽपरिदृश्यमानाभ्यां, तु तद्व्यतिरिक्ते, विषयविभागे क्रियमाणे लक्षणायास्तदभावस्य च स्वरूपभेदे निश्चीयमाने सति, तुरङ्गकान्ताननहव्यवाहेत्यादीनामसति प्रयोजने तुरङ्गकान्ताननहव्यवाहादिप्रयोगजातेषु प्रयोजनाभावात्, दुष्टत्वमेव दोषदर्शनमेव संगच्छते। सति तु गुप्तार्थप्रतिपादनप्रयोजनसंभवे किमपि विशिष्टार्थप्रतिपादनरूपप्रयोजनसहितत्वे सति, एवंविधानामपि तुरङ्गकान्ताननहव्यवाह इत्यादीनामपि, लक्षणानां लाक्षणिकप्रयोगाणाम्, अदुष्टत्वम् दोषरहितत्वम्। **तथाविधविषये** इति। तथाविधविषये तादृशस्थले, वृद्धव्यवहारेण परंपरया, तासां लक्षणानाम्, अभ्यनुज्ञातत्वात् स्वीकृतत्वात्।

निगमयितुमाह **तदेवमिति**। तत् तस्मात्, एवं पूर्वोक्तप्रकारेण, वक्त्रादिसामग्र्यनुप्रवेशेन वक्तृवाक्यवाच्यादिसामग्रीसहितेन, अर्थान्तरं प्रति मुख्यार्थभिन्नमर्थान्तरं प्रति, स्वार्थमर्पयतां शब्दानां स्वार्थं मुख्यार्थं

समर्पयतां शब्दानां, वृद्धव्यवहारे स्वरूपद्वारेण परंपरया स्वीकारेण, सजातीयशब्दद्वारेण वा रूढप्रयोगद्वारा वा, लक्षकत्वमिति स्थितं लाक्षणिकत्वमिति निश्चितम्।

अयमर्थः तेषामेव शब्दानां लाक्षणिकत्वं येषां शब्दानां तत्तदर्थे प्रयोगः रूढोऽथवा वृद्धव्यवहारे (परंपरायां) परिदृष्टस्वभावः। एतद्द्वितयाभावे यदि लाक्षणिकप्रयोगः क्रियेत तदा तुरङ्गकान्ताननहव्यवाहादिशब्दानामिव दुष्टत्वमेवावगन्तव्यम्।

**(सङ्गमनी)**

अशक्तिकृतलक्षणा का क्षेत्र सोदाहरण बतलाने हेतु कहते हैं- **यासां तु लक्षणानां** इत्यादि। जो लाक्षणिक प्रयोग न तो वृद्धव्यवहार (परंपरा) में दिखता है, न ही राजा आदि शब्दों की भांति रूढ हैं और न भी लक्षणा जातीय अन्य शब्दों में लिप्त आदि शब्दों की भांति दिखता है; उन लाक्षणिक प्रयोगों को अशक्तिकृत लक्षणा कहा जाता है। जैसे कि- मध्ये समुद्रम् इत्यादि। जिस का अर्थ है-

वडवानल की ज्वाला की भाँति स्वर्ण भूमि की कांति से दिशाओं को पिशंगीकृत करती हुई समुद्र के मध्य में जल का भेदन कर निकलती हुई-सी सुशोभित हो रही थी।

यह महाकवि माघ के द्वारा रचित शिशुपालवधम् महाकाव्य के तृतीय सर्ग के ३३वाँ श्लोक है। इसमें तुरंगकान्ताननहव्यवाह शब्द जिस का वाच्य अर्थ है घोडे की पत्नी (बडवा) के मुख की अग्नि। यह शब्द समुद्र में प्रज्वलित रहने वाली अग्नि के लिए लक्षणा द्वारा माघ ने किया है। किन्तु तुरंगकान्ताननहव्यवाह शब्द बडवामुखानल के लिए न तो रूढ (परंपरा में प्रयुक्त) है, और न ही इसमें लक्ष्यार्थ में विद्यमान गुण के सजातीय गुण हैं, जिस से यह कहीं संबद्ध हो कर और कहीं असंबद्ध हो कर उस अर्थ के वाचक रूप में दिखा है। अतः ऐसे स्थलों में लक्षणा का होना संभव नहीं है।

यहाँ यह प्रश्न हो सकता है कि जिस प्रकार द्विरेफ आदि शब्द दो रेफों से युक्त भ्रमर आदि शब्दों की प्रतीति लक्षणा द्वारा कराते हुए षट्पद

(भौंरा) आदि अर्थ का बोध कराते हैं, उसी प्रकार तुरंगकान्ताननहव्यवाह आदि शब्द भी बडवा आदि शब्द की लक्षणा द्वारा प्रतीति कराते हुए बडवा पदवाच्य समुद्र की अग्नि के बोधक के रूप में क्यों न माना जाए? क्यों कि इसी प्रकार द्विरेफ आदि शब्दों में शब्दलक्षणा का प्रयोग साहित्य में उपलब्ध है।

उपर्युक्त प्रश्न का उत्तर यह है कि- इस प्रकार का प्रश्न उचित नहीं है। क्यों कि लक्षणा व्यापार उन्हीं शब्दों में माना जाता है जहाँ उस प्रकार के प्रयोगों को वृद्धव्यवहार में स्वीकार किया गया हो, तथा शब्द के मुख्य अर्थ एवं लक्ष्यमाण अर्थ के बीच सादृश्यादि धर्म दिखते हों, न कि सर्वत्र। अन्यथा कोई भी शब्द किसी भी धर्म के संबन्ध से किसी भी अर्थ के प्रति लाक्षणिक शब्द के रूप में स्वीकृत हो सकता है और कोई भी शब्द किसी भी अर्थ के प्रति अगमक सिद्ध नहीं होगा। अर्थात् किसी भी शब्द से कोई भी अर्थ समझा जा सकता है। वृद्धव्यवहार में दिखनेवाले प्रयोगों में लक्षणा का होना एवं वृद्धव्यवहार में न दिखनेवाले नवीन प्रयोगों में लक्षणा का न होना ही लक्षणा के क्षेत्र को निश्चित करने पर तुरंगकान्ताननहव्यवाह इत्यादि शब्दों के प्रयोगों को किसी विशेष प्रयोजन के अभाव में दोषयुक्त ही माना जाएगा। यदि कदाचित् इस प्रकार के प्रयोगों में किसी गुप्त अर्थ के प्रतिपादन रूप प्रयोजन की संभावना हो तो इस प्रकार के लाक्षणिक प्रयोग भी दोषरहित माने जा सकते हैं। क्यों कि प्रयोजन विशेष की स्थिति में इस प्रकार के प्रयोगों की अनुज्ञा वृद्ध व्यवहार से प्राप्त है।

इस प्रकार यह सिद्धान्त है कि वक्ता, वाक्य एवं वाच्य तथा देश, काल एवं अवस्था आदि के वैशिष्ट्य से जब शब्द अपने मुख्य अर्थ को अन्य अर्थ के लिए समर्पित करते हुए वृद्ध व्यवहार से स्वरूप के द्वारा अथवा सजातीय शब्द के द्वारा अन्य अर्थ के बोधक के रूप में निर्णीत हों उस स्थिति में उस शब्द की लाक्षणिकता सिद्ध होगी।

(मातृका)

{वक्तृनिबन्धना लक्षणा}

तत्र वक्तृनिबन्धनत्वेन यत्र लाक्षणिकोऽर्थोऽवगम्यते तत्रोदाहरणम्-

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि,
प्रायो नैष शिशोः पिताऽस्य विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि [१२]तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रा वपुरालिखन्तु जरठच्छेदा नलग्रन्थयः।।

अत्र हि परपुरुषसंभोगानुभवेच्छया संकेतस्थानं युवतिर्व्रजन्ती स्वप्रवृत्तिप्रयोजनं विशिष्टसंकेतस्थानाधारं परपुरुषसंभोगात्मकं तथा संभोगचिह्नानि नखदशनक्षतानि गात्रसंलग्नतया शंक्यमानाविर्भावाणि यथाक्रमं भर्तृपिपासा-निवृत्तिक्षम-नादेय-सरसपानीयानयनेन चिरच्छिन्ननलग्रन्थिपरुषजर्जरप्रान्त-जनयिष्यमाणेन च गात्रगतविकारविशेषोद्गमेनापह्नुत्याभिधत्ते। सा चात्रापह्नुतिरसाध्व्या वक्तृत्वं पर्यालोच्यावगम्यते। अपह्नवस्य चालीकवस्त्वभिधानात्मकत्वादलीकस्य च सत्यार्थविपर्यास-कारित्वादलीकेनार्थेन त्वसत्योक्तः स्वसिद्ध्यर्थत्वेनाक्षिप्यते। तेनात्र वक्तृविशेषपर्यालोचनया सत्यार्थे निष्ठाया उपादानात्मिकाया लक्षणायाः प्रतिपत्तिः। न ह्यत्र वाक्यवाच्ययोः सामर्थ्यम्। साध्व्या वक्तृत्वे सति तयोरेवंविधार्थाक्षेपासमर्थत्वात्।

---

१२. पाठान्तरम् एकाकिन्यपि यामि तद्वनमितः स्रोतस्तमालाकुलं, डॉ. ब्रह्ममित्रावस्थिद्वरा इन्दुप्रकाशनेन (८/७ रूपनगर, दल्ली) प्रकाशितायाम् अभिदावृत्तिमातृकायाम्, १९७७। एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलम्, कृष्णदास अकादमी वाराणसीपक्षतः २००२ ई.वर्षे प्रकाशिते साहित्यदर्पणे लभ्यते।

## (सुबोधिनी)

**तत्र वक्तृनिबन्धनत्वेने**ति। वक्तृनिबन्धनत्वेन वक्तृवैशिष्ट्यात्, यत्र लक्षणायां, लाक्षणिकोऽर्थोऽवगम्यते लक्ष्यार्थः प्रतीयते तत्रोदाहरणं **दृष्टिं हे** इत्यादि। हे प्रतिवेशिनि! क्षणम् इह अपि अस्मद्गृहे दृष्टिं दास्यसि? अस्य शिशोः एषः पिता कौपीः अपः प्रायः न पास्यति। तद् एकाकिनी अपि तमालाकुलं स्रोतः इतः यामि। नीरन्ध्राः जरठच्छेदा नलग्रन्थयः वपुः आलिखन्तु वरम् इत्यन्वयः। काचित्स्वैरिणी समीपगृहवासिनीं प्रति कथयति। हे प्रतिवेशिनि हे समीपगृहवासिनि! क्षणं किञ्चित्कालम्, इहात्रास्मद्गृहेऽपि, दृष्टिम् अवलोकनं, दास्यसि वितरिस्यसि? अस्य पुरोदृश्यमानस्य शिशोः, एषः पिता जनकः मम पतिरित्यर्थः, प्रायेण बहुशः, विरसाः नीरसाः, कौपीः कूपभवाः, अपः जलानि, न पास्यति नो धास्यति, तद् तस्मात्, एकाकिनी अपि एकाऽपि सहायरहिताऽपि, तमालाकुलं तापिच्छलतावेष्टितं, स्रोतः प्राकृतिकजलप्रवाहं (स्रोतोऽम्बुसरणं स्वतः इत्यमरः), इतः अस्मात् स्थानात्, यामि गच्छामि। नीरन्ध्राः निरन्तराः, जरठच्छेदाः कठोरच्छेदयुक्ताः, नलग्रन्थयो नलतृणपर्वाणि, तनुं शरीरम्, आलिखन्तु विदारयन्तु, वरं नाम।

**अत्र ही**ति। अत्र हि दृष्टिं हे प्रतिवेशिनीत्यादौ, परपुरुषसंभोगानुभवेच्छया उपपतिसमागमानुभवकामनया, संकेतस्थानं संकेतस्थलं, व्रजन्ती गच्छन्ती, युवतिः रमणी, स्वप्रवृत्तिप्रयोजनं आत्मप्रवृत्तिकारणं, विशिष्टसंकेतस्थानाधारं विशिष्टं विलक्षणं संकेतस्थानं, संकेतस्थलम् एवाधारस्तं, परपुरुषसंभोगात्मकं अन्यपुरुषसमागमरूपं, तथा अन्यच्च, संभोगचिह्नानि सुरतलिङ्गानि, नखदशनक्षतानि करजदन्तक्षतानि, गात्रसंलग्नतया शरीरसंलग्नतया, शंक्यमानाविर्भावाणि शंक्यमानाः संभाव्यमानाः आविर्भावाः प्रकाशाः येषां तानि, यथाक्रमं क्रमानुसारं, भर्तृपिपासानिवृत्तिक्षमनादेय-

सरसपानीयानयनेन भर्तुः पत्युः पिपासा तृष्णा तस्याः निवृत्त्यै निवारणाय क्षमं समर्थं नादेयं नद्यां भवं (नदी ढक्) सरिद्युत्पन्नं सरसपानीयस्य स्वादिष्टजलस्य आनयनेन आहरणेन, चिरच्छिन्न-नलग्रन्थिपरुषजर्जरप्रान्तजनयिष्यमाणेन चिरच्छिन्नाः बहुकालात् त्रुटिता या नलग्रन्थयः नलतृणपर्वाणि तत्परुषजर्जरप्रान्तैः तेषां कठोरजीर्णप्रान्तभागैः जनयिष्यमाणेन उत्पाद्यमानेन, च, गात्रगतविकारविशेषोद्गमेन शरीरस्थविकृतिविशेषाविर्भावेण, अपह्नुत्य गोपाय्य, अभिधत्ते वक्ति। **सा चात्रे**ति। सा चासाध्याऽपह्नुतिः तादृग् गोपायनं, वक्तृत्वं पर्यालोच्य असाध्वीस्त्रीरूपं वक्तृत्वं वक्तुः भावं पर्यालोच्य विमृश्य, अवगम्यते ज्ञायते। **अपह्नवस्ये**ति। अपह्नवस्य च गोपायनस्य च, अलीकवस्त्वभिधानात्मकत्वात् असत्यार्थप्रकाशनरूपत्वात्, अलीकस्य च असत्यस्य च, सत्यार्थविपर्यासकारित्वात् भूतार्थविरुद्धत्वात्, अलीकेनार्थेन असत्यार्थेन, तु परन्तु, असत्योक्तः असत्यवचनं (**वस्तुतः सत्योक्तः इति स्यात्**), स्वसिद्ध्यर्थत्वेनाक्षिप्यते आत्मनः सिद्ध्यर्थं लक्षणया गोचरीक्रियते। **तेनात्रे**ति। तेन तस्मात्, अत्र दृष्टिं हे प्रतिवेशिनी इत्यादौ, वक्तृविशेषपर्यालोचनया वक्तुर्वैशिष्ट्यानुशीलनेन, सत्यार्थे निष्ठायाः भूतार्थे अश्रितायाः संभोगार्थं नदीतीरगमनरूपायाः, लक्षणाया उपादानलक्षणायाः, प्रतिपत्तिः ज्ञानम्। **नह्यत्रे**ति। अत्र प्रस्तुते पद्ये, न वाक्यवाच्ययोः सामर्थ्यं न वाक्यसामर्थ्यात् नापि वाच्यसामर्थ्यात् लक्ष्यार्थप्रतिपत्तिरिति भावः। **साध्व्याः** इति। साध्व्याः वक्तृत्वे सति यदि साध्वी वक्त्री स्यात् तदा, तयोः वाक्यवाच्ययोः, एवंविधार्थाक्षेपासमर्थत्वात् एवं विधो योऽर्थः संभोगार्थं नदीगमनरूप-स्तस्याक्षेपस्य लक्ष्यमाणस्य असमर्थत्वात् असम्भवत्वात्। अयमर्थः वस्तुतः पद्येस्मिन् वक्तृवैशिष्ट्यादेव लक्ष्यार्थप्रतिपत्तिर्जायते, न तु वाक्यवाच्ययोर्वैशिष्ट्यात्, यतो हि यद्यत्र काचित् साध्वी स्त्री

वक्तृत्वेनोपन्यस्ताऽभविष्यत् तदा तं लक्ष्यार्थं बोधयितुं वक्तृवाच्ययोः सामर्थ्यं नाभविष्यत्।

(सङ्क्रमनी)

वक्तृवैशिष्ट्या लक्षणा को उदाहरण मुख से बताते हैं- **तत्र वक्तृनिबन्धनत्वेन** इत्यादि। वक्ता के वैशिष्ट्य से जहाँ लाक्षणिक अर्थ का निर्धारण किया जाता है उसका उदाहरण दृष्टिं हे प्रतिवेशिनि इत्यादि श्लोक, जिस का अर्थ निम्नवत् है-

हे पडोसिन ! कुछ देर मेरे घर पर भी नजर रखना, क्यों कि इस बालक के पिता अर्थात् मेरे पति कुएं का नीरस पानी प्रायः नहीं पीते। इसलिए और क्या करुँ? भले ही सघन और बहुत पहले काटे हुए नल लताओं की गाठें मेरे शरीर को क्यों न खरोच डालें, यहाँ से अकेले ही तमाल वृक्षों के समूह से ढके हुए नदी में जा रही हूँ।

यहाँ पर पुरुष से संभोग सुख के अनुभव की इच्छा से संकेत स्थल पर जाती हुई युवती अपने जाने के प्रयोजन को, विशिष्ट संकेत स्थल के आधार को, पर पुरुष के साथ संभोग को तथा शरीर में लगने से शंक्यमान नखक्षत, दन्तक्षत आदि संभोग के चिह्नों को यथाक्रम पति की पिपासा शान्त करने में समर्थ नदी के सरस जल के लाने द्वारा, तथा पुराने काटे हुए नल की गाठों वाले कठोर साथ ही जर्जर प्रदेश में संभावित शरीरगत विकारविशेष की उत्पत्ति के कहने के द्वारा छिपाते हुए कह रही है। वह अपह्नुति (संकेत स्थान पर गमन को एवं संभोगचिह्नों को छिपाना) तब सिद्ध होती है, जब यह बोध होता है कि यहाँ कहनेवाली कोई असाध्वी (दुराचारिणी) स्त्री है। क्योंकि अपह्नव (छिपाना) असत्य अर्थ के कथन के रूप में ही होता है एवं असत्य अर्थ सत्य अर्थ का विपरीत होता है। अतः असत्यकथन से मुख्यार्थ की सिद्धि के लिए प्रयुक्त सत्य अर्थ का आक्षेप किया जाता है। इस प्रकार यहाँ वक्तृविशेष के पर्यालोचन के द्वारा सत्य अर्थनिष्ठ (संभोग के लिए नदी के तट पर गमन रूप अर्थ का बोधक) उपादानलक्षणा का निर्धारण होता है। यहाँ (सत्यार्थ बोधन हेतु) वाक्य एवं

वाच्य अर्थ का सामर्थ्य नहीं है। क्योंकि यदि वक्ता कोई साध्वी पतिव्रता स्त्री हो, वाक्य एवं वाच्य के द्वारा इस प्रकार लक्ष्यमाण अर्थ (संभोग हेतु नदी में जाना) संभव न होता।

## (मातृका)

{वाक्यनिबन्धना लक्षणा}

**वाक्यगतरूपविशेषपर्यालोचनया तु यत्र लाक्षणिकार्थपरिग्रहः, तत्रोदाहरणम्-**

**प्राप्तश्रीरेष कस्मात् पुनरपि मयि मन्थखेदं विदध्या-**
**न्निद्रामप्यस्य पूर्वामनलसमनसो नैव संभावयामि।**
**सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-**
**स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः।।**

**अत्र हि चाटुश्लोकेनोपश्लोक्यते यो नृपतिस्तदीयबलभर-क्षोभ्यमाणस्वावस्थस्य समुद्रस्य यः कम्पः अतिशयोक्त्योपवर्णितः तस्य समुद्रकर्तृकवितर्कधारणहेतुकत्वमत्रोत्प्रेक्षितम् 'इति वितर्कान् दधत इवे'ति। ते च वितर्काः प्राप्तश्रीरित्यादिना भगवद्वासुदेवस्य व्यापारविशेषविषयाः। यावच्च तस्य नृपतेर्भगवद्वासुदेवता न समस्ति तावत् कथं तदीयेषु व्यापारविशेषेषु संशयः समुपजायते। अतोत्र यदेतद् बलभराक्रान्तत्वेन समुद्रस्याकम्पमानस्यापि कम्पमानार्थसादृश्यात् कम्पमानत्वमध्यवसितं तत्राध्यवसानगर्भगौणोपचारः, अकम्पमानस्यापि तस्य कम्पनार्थत्वेनाध्यवसितत्वात्। अत एव चेयं भेदेऽप्यभेद इत्येवमात्मिकातिशयोक्तिः। विकल्पवशाद् यश्चेतनानां मूर्धकम्पो बाहुल्येन परिदृश्यते चेतनगतसंशयहेतुकमूर्धकम्पसादृश्यात् तद्भावोऽस्य कम्पस्योपचर्यते। एवं चात्राप्यध्यवसानगर्भो गौण उपचारः। इयमपि च विभिन्नयोरपि कम्पयोरभेदेनाध्यवसानात् भेदेऽप्यभेद**

इत्येवमात्मिकाऽतिशयोक्तिः। तन्निबन्धनैव चेयमुत्प्रेक्षा- 'इति वितर्कान् दधत इवे'ति। अत्र हि कार्यभूतकम्पदर्शनात् कारणभूतं वितर्कधारणं मिथ्याज्ञानस्वरूपयोत्प्रेक्षयोत्प्रेक्ष्यते। अत्रापि च वितर्कानधारयतोऽपि पयोधेः वितर्कधारणोपनिबन्धाद् भेदेऽप्यभेद इत्येवमात्मिकाऽतिशयोक्तिर्गर्भीकृता। तदुक्तमुत्प्रेक्षालक्षणे-

साम्यरूपविवक्षायां वाच्ये वाच्यात्मभिः पदैः।
अतद्गुणक्रियायोगादुत्प्रेक्षातिशयान्विता।। इति।

संभाव्यमानस्य गुणक्रियायोगात्, तेनात्राप्यध्यवसानगर्भो गौण उपचारः। प्राप्तश्रीरित्यादिषु तु त्रिषु वितर्केषु भगवद्वासुदेवविषयेषु यथायोगं तत्तत्कार्यनिराकरणहेतुगर्भतया प्रवर्तमानेषु नृपतेर्भगवद्वासुदेवताऽऽक्षिप्ता। तेनात्रोपादानात्मिका लक्षणा। भगवद्वासुदेवरूपतया चात्र नृपतेरध्यवसानगर्भो गौण उपचारः। एतच्चात्र सर्ववाक्योपात्तपदसमन्वयान्यथानुपपत्त्यावगम्यत इति वाक्यनिबन्धनात्र लक्षणा।

## (सुबोधिनी)

वाक्यवैशिष्ट्यां लक्षणामुदाहर्तुमाह **वाक्यगतरूपविशेषेति**। यत्र लक्ष्ये, वाक्यगतरूपविशेषपर्यालोचनया वाक्यगतस्य रूपविशेषस्य पर्यालोचनयाऽनुशीलनेन, तु व्यतिरेके, लाक्षणिकार्थपरिग्रहः लाक्षणिकार्थस्य स्वीकारः ज्ञानं वा, तत्रोदाहरणम् यथा -**प्राप्तश्रीरेष** इत्यदि। हे राजन्! त्वयि आयाते "एषः प्राप्तश्रीः, कस्मात् पुनरपि मयि तं मन्थखेदं विदध्यात्? अस्यानलसमनसः पूर्वां निद्रामपि नैव संभावयामि। सकलद्वीपनाथानुयातः भूयः किमिति च सेतुं बध्नाति?" इति वितर्कान् दधतः पयोधेः कम्पः इव आभाति इत्यन्वयः। हे राजन्! त्वयि आयाते उपगते सति, प्राप्ता श्रीर्येन तादृश एष पुनरपि, मयि तमनुभूतपूर्वं, मन्थखेदं मन्दरगिरिपीडनं, कस्माद् विदध्यात् कुर्यात्?

अस्यानलसमनसः आलस्यशून्यहृदयस्यास्य, पूर्वां प्राचीनां निद्रामपि, नैव संभावयाम्रि तर्कयामि, सकलानां समस्तानां द्वीपानां देशानां नाथैः अधिपैः, अनुयातः अनुसृतश्चायं, भूयः किमिति सेतुं बध्नाति ? इत्येवं इत्थं प्रकारेण, वितर्कान् संकल्पान् संदेहान् वा, दधतः धारयतः, पयोधेः समुद्रस्य, कम्पः इव कम्पनं इव, आभाति प्रतीयते।

**अत्र ही**ति। अत्र हि प्राप्तश्रीरेष इत्यादौ, चाटुश्लोकेन प्रसंशापद्येन, उपश्लोक्यते प्रसश्यते, यो नृपती राजा, तदीयबलभरक्षोभ्यमाणस्वावस्थस्य तदीयेन बलभरेण सैन्यसमुदायेन क्षोभ्यमाणा पीड्यमाना स्वावस्था नैजस्थितिर्यस्य तस्य, समुद्रस्य सागरस्य, अतिशयोक्त्या उपवर्णितः निरूपितः, यः कम्पः कम्पनं, तस्य कम्पस्य, समुद्रकर्तृकवितर्कधारणहेतुकत्वम् समुद्रः कर्ता यस्य तत् समुद्रकर्तृकं वितर्कधारणस्य संदेहपालनस्य हेतुरेव हेतुकं तस्य भावः सागरविहितसंदेहपालनकारणत्वम्, अत्रोत्प्रेक्षितं अत्र संभावितम्, 'इति वितर्कान् दधत इवे'ति। **ते च वितर्काः** इति। ते च वितर्काः संशयाः, प्राप्तश्रीरित्यादिना पद्येन, भगवद्वासुदेवस्य विष्णोः, व्यापारविशेषविषयाः क्रियाविशेषाणां स्वरूपाणि। यावच्च यत्कालावधि, तस्य नृपतेः राज्ञः, भगवद्वासुदेवता श्रीकृष्णत्वं, न समस्ति न संभवति, तावत् तत्कालावधि, कथं केन प्रकारेण, तदीयेषु व्यापारविशेषेषु तत्संबन्धिक्रियाविशेषेषु, संशयः समुपजायते समुत्पद्यते ? अतोऽत्र प्राप्तश्रीरेष इत्यादौ, बलभराक्रान्तत्वेन सैन्यसमुदायपीडितत्वेन, अकम्पमानस्यापि समुद्रस्य अवेपमानस्यापि सागरस्य, कम्पमानार्थसादृश्यात् वेपमानार्थसाम्यात्, यत् कम्पमानत्वमध्यवसितं निगीर्णं, तत्राध्यवसानगर्भगौणोपचारः, अकम्पमानस्यापि तस्य समुद्रस्य, कम्पमात्वेनाध्यवसितत्वात् वेपमानत्वेन निगीर्णत्वात्। अयं भावः अध्यवसानं नामाऽऽरोप्यमाणे आरोपविषयस्यापह्नवः निगीरणं वा, सादृश्यसंबन्धमूलो य आरोपः स गौणोपचार इत्युच्यते, समुद्रस्य

स्वाभाविकोर्मिप्रकाशं गोपयित्वा यत्कम्पनमध्यवसितं, कम्पमानार्थसादृश्याच्चात्राध्यवसानगर्भः गौणोपचारः। **अत एवे**ति। अत एव एतस्मादेव, चेयं, भेदेऽपि अभेदः अकम्पमानस्यापि कम्पमानत्वेन विवक्षितत्वात्, इत्येवमात्मिकाऽतिशयोक्तिः इत्येवं रूपातिशयोक्तिः। कम्पनस्य कारणं प्रस्तौति **विकल्पवशादि**ति। विकल्पवशात् संशयकारणात्, चेतनानां सचेतसां प्राणिनां, यो मूर्धकम्पः शिरोधूननं, बाहुल्येन परिदृश्यते आधिक्येन लक्ष्यते, चेतनगतसंशयहेतुकमूर्धकम्पसादृश्यात् चेतनगतः संशयहेतुकः यो मूर्धकम्पः तस्य सादृश्यात्, अस्य कम्पस्य समुद्रकर्तृकस्येतिभावः, तद्भावः शिरोधूननरूपः स्वभावः, उपचर्यते आरोप्यते। **एवं चात्रे**ति। एवं पूर्वोक्तप्रकारेणात्राध्यवसानगर्भः गौणोपचार इति स्पष्टम्। **इयमपि चे**ति। विभिन्नयोरपि कम्पयोः प्राणिजन्यसमुद्रजन्ययोः, अभेदेनाध्यवसानात् भेदराहित्येन निगीरणात्, भेदेऽप्यभेद इत्येवात्मिकाऽतिशयोक्तिरियमिति स्पष्टम्। **तन्निबन्धना चेयमुत्प्रेक्षे**ति। तन्निबन्धनैव भेदेऽप्यभेदात्मिकातिशयोक्तिमूलकैव, चेयमुत्प्रेक्षा 'इति वितर्कान् दधत इवे'ति स्पष्टम्। उत्प्रेक्षायाः कारणं दर्शयति **अत्र ही**ति। अत्र हि पद्येऽस्मिन्, कार्यभूतकम्पदर्शनात् कार्यस्वरूपः यः कम्पस्तस्य दर्शनात्, कारणभूतं यद् वितर्कधारणं, तत्, मिथ्याज्ञानस्वरूपया उत्प्रेक्षया मिथ्याज्ञानात्मकसंभावनया, उत्प्रेक्षते संभाव्यत इत्यत्रोत्प्रेक्षाऽलंकारः। **अत्रापि चे**ति। वितर्कान् संशयान्, अधारयतोऽपि अकुर्वतोऽपि, पयोधेः समुद्रस्य, वितर्कधारणोपनिबन्धात् वितर्कधारणप्रयोगात्, भेदेऽप्यभेद इत्येवात्मिकाऽतिशयोक्तिर्गर्भीकृता। तस्या उत्प्रेक्षाया लक्षणं प्रतिपादयितुमाह **तदुक्तमि**त्यदि स्पष्टम्। **साम्यरूपविवक्षायामि**ति। वाच्यम् आत्मा येषां पदानां तैः, वाच्ये प्रकृते उपमेये, अतद्गुणक्रियायोगात् तद् (उपमानं) तद्गता ये गुणाः क्रियाश्च तैर्योगो न तस्मादतद्गुणक्रियायोगात्, साम्यरूपविवक्षायां सादृश्यरूपस्य

विवक्षायाम्, अतिशयान्विता उत्प्रेक्षा अतिशयोक्तिगर्भा उत्प्रेक्षा भवतीत्यर्थः। अयमर्थः उपमानोपमेययोः गुणगतं क्रियागतं वा सादृश्यं विनाऽपि, यदि साम्यविवक्षा भवति तदाऽतिशयोक्तिगर्भोत्प्रेक्षा स्यात्। इयमेवात्र भेदेऽप्यभेदात्मिकाऽतिशयोक्तिगर्भोत्प्रेक्षा।

अतद्गुणक्रियायोगादित्यस्यार्थं प्रतिपादयति **सम्भाव्यमानस्येति**। सम्भाव्यमानस्य उत्प्रेक्ष्यमाणस्य उपमानस्येत्यर्थः, गुणक्रियायोगात् गुणक्रियासंबन्धात्। **तेनात्रेति**। तेनात्रापि प्राप्तश्रीरित्यादावपि, अध्यवसानगर्भो गौण उपचार इति स्पष्टम्। **प्राप्तश्रीरित्यादिष्विति**। भगवद्वासुदेवविषयेषु श्रीकृष्णगतेषु, त्रिषु वितर्केषु मन्थन-निद्रा-सेतुबन्धरूपेषु त्रिषु संशयेषु, यथायोगं यथासंभवं, तत्तत्कार्यनिराकरणहेतुगर्भतया तेषां तेषां कार्याणां मन्थन-निद्रा-सेतुबन्धरूपाणां निराकरणे प्राप्तश्रीत्वानलसमनसत्व-कृतसेतुबन्धनत्वरूपा ये हेतवस्तेषां गर्भतया, प्रवर्तमानेषु क्रियमाणेषु वितर्केष्वित्यर्थः, नृपतेः राज्ञः,भगवद्वासुदेवताऽऽक्षिप्ता श्रीकृष्णता लक्षिता। **तेनात्रेति**। तेन तस्मात्, अत्र प्राप्तश्रीरित्यादौ, उपादानात्मिका लक्षणा स्वार्थापरित्यागपूर्वकं परार्थबोधात्। **भगवद्वासुदेवरूपतयेति**। अत्र नृपतेः राज्ञः भगवद्वासुदेवरूपतया श्रीकृष्णरूपतया, अध्यवसानान्निगीरणात्,अध्यवसानगर्भो गौण उपचारः। **एतच्चात्रेति**। एतच्च नृपतेर्वासुदेवत्वाध्यवसानं, सर्ववाक्योपात्तपद-समन्वयान्यथानुपपत्त्या सर्वं सम्पूर्णं यद्वाक्यं तत्रोपात्तानि यानि पदानि तेषां समन्वयः तदन्यथानुपपत्त्या यद्विना यन्न जायते साऽन्यथानुपपत्तिस्तया, अवगम्यते बोध्यते इति वाक्यनिबन्धनात्र लक्षणा, अयमर्थः अत्र वाक्यघटकानां सर्वेषां पदानां समन्वयेन विना अस्य वाक्यार्थस्य राज्ञः भगवद्वासुदेवत्वरूपस्य नैवोपपत्तिर्जायत इत्यत्र वाक्यनिबन्धना लक्षणा।

## (सङ्क्रमनी)

वाक्यवैशिष्ट्या लक्षणा को सोदाहरण बताने हेतु कहते हैं- **वाक्यगतरूपविशेषपर्यालोचनया** इत्यादि। वाक्यगत वैशिष्ट्य की पर्यालोचना से प्रतीयमान लाक्षणिक अर्थ का उदाहरण प्राप्तश्रीरेष इस पद्य में मिलता है-

हे राजन् ! आपको अपनी ओर आया हुआ देख कर समुद्र मानों इन वितर्कों को धारण करता हुआ कम्पित होने लगता है, इन्हें तो पहले से ही लक्ष्मी प्राप्त है, फिर क्यों पुनः मन्थन का कष्ट करेंगे ?(क्योंकि जब विष्णु को लक्ष्मी प्राप्त नहीं थी तब समुद्र का मन्थन किया।

उपर्युक्त श्लोक में लाक्षणिक अर्थ का संगमन करने हेतु कहते हैं- **अत्र हि** इत्यादि। यहाँ प्रसंशापरक पद्य में जिस नृप की प्रसंशा की जाती है, उस नृप के सैन्य के भार से जिस समुद्र की अवस्था क्षुब्ध थी, उस (समुद्र) का कम्प अतिशयोक्ति द्वारा वर्णित है, उस के कारण के रूप में समुद्र के द्वारा किया गया संदेहधारण (वितर्क) की उत्प्रेक्षा (संभावना) 'मानों यह इन वितर्कों को धारण किया हुआ है' इन शब्दों में की गयी है। वे वितर्क (संदेह) भगवान् वासुदेव (विष्णु) के व्यापारविशेष के विषय हैं। जब तक राजा की विष्णुरूपता संभव नहीं है तब तक कैसे राजा के विषय में ये वितर्क (संदेह) संभव होंगे ? यहाँ समुद्र के न काँपते हुए भी कम्पमान रूप अर्थ के सादृश्य के कारण राजा के सैन्यों के भार से आक्रान्त हो कर समुद्र काँप रहा है इस प्रकार समुद्र में कम्पमानत्व धर्म का अध्यवसान किया गया है। अतः यहाँ न काँपते हुए भी कम्पमानत्व धर्म का अध्यवसान होने से अध्यवसान मूलक गौण उपचार है। इसीलिए यहाँ भेद होने पर भी अभेद रूपक अतिशयोक्ति है। संदेह के कारण चेतन प्राणिओं में शर हिलाना अधिकतर दिखता है। अतः जिस प्रकार चेतन प्राणिओं का शर हिलाने का कारण संदेह होता है उसी प्रकार समुद्र के कम्प का भी कारण में उस के द्वारा किया हुआ संदेह को आरोपित किया गया है। इस प्रकार यहाँ अध्यवसागर्भ गौण उपचार है। और भी यहाँ समुद्रगत कम्प और सचेता प्राणी गत कम्प में भेद होते हुए भी अभेद के रूप में प्रतिपादित होने

से भेद में भी अभेद इस प्रकार की अतिशयोक्ति है। और उस भेद में भी अभेद रूपक अतिशयोक्तमूलक उत्प्रेक्षा भी 'मानों यह इन वितर्कों को धारण किया हुआ है' इन शब्दों से प्रतीत होती है। यहाँ कार्यभूत कम्प के दर्शन से कारणभूत संदेहपालन रूपक मिथ्याज्ञानस्वरूप संभावना से उत्प्रेक्षित है। इस प्रकार की उत्प्रेक्षा में वितर्कों को धारण न करते हुए भी समुद्र के वितर्क धारण रूप कार्य के बतलाने से भेद में भी अभेद इस प्रकार की अतिशयोक्ति गर्भीकृत है। क्योंकि उत्प्रेक्षा के लक्षण में बताया गया है-

**(कारिका)** वाचक पदों के द्वारा वाच्य (उपमेय) में उपमानगत (तद्गुण) क्रियाओं के संबन्ध न होने से भी सादृश्यरूप की विवक्षा में अतिशयोक्ति गर्भ उत्प्रेक्षा होती है। अर्थात् उपमान और उपमेय में गुणगत और क्रियागत सादृश्य के न होने पर भी यदि दोनों में साम्य की विवक्षा होती है तब अतिशयोक्तिगर्भ उत्प्रेक्षा मानी जाती है।

कारिका की व्याख्या प्रस्तुत करते हैं- संभाव्यमान अर्थात् उत्प्रेक्ष्यमाण उपमान का उपमेय के साथ गुण और क्रियागत साम्य न होने पर संभाव्यमान के वाचक पदों द्वारा संभाव्य विषय और संभाव्यमान में रूपसाम्य की विवक्षा हो तो वहाँ अतिशयोक्तिगर्भ उत्प्रेक्षा होती है। प्रस्तुत कारिका के तृतीय चरण में तत् पद का अर्थ है संभाव्यमान; अतः तद्गुणक्रियायोगात् का अर्थ होगा संभाव्यमान के गुण और क्रिया के संबन्ध से, और नञ्-समासद्वारा उसके अभाव का कथन विवक्षित है। इस प्रकार प्रस्तुत पद्य में अध्यवसानगर्भ गौण उपचार है। प्राप्तश्री इत्यादि भगवान् विष्णुविषयक तीन विकल्पों में क्रमशः उन उन कार्यों के निराकरण के हेतु को गर्भस्थ करके विकल्प पूर्वक उस राजा में विष्णुत्व का आक्षेप किया गया है। इसलिए यहाँ उपादान लक्षणा है। क्योंकि राजा पर भगवान् विष्णु के रूप का अध्यवसान किया गया है। अतः यहाँ अध्यवसानगर्भ गौण उपचार है। उपर्युक्त सभी अर्थ की प्रतीति वाक्यगत पदों के समन्वय के बिना नहीं हो पातीं, अतः यहाँ वाक्यवैशिष्ट्या लक्षणा है।

(मातृका)

{वाच्यनिबन्धना लक्षणा}

वाच्यनिबन्धना तु यथा-

दुर्वारा मदनेषवो दिशि दिशि व्याजृम्भते माधवो
हृद्युन्मादकराः शशाङ्करुचयश्चेतोहराः कोकिलाः।
उत्तुङ्गस्तनभारदुर्धरमिदं प्रत्यग्रमन्यद् वयः
सोढव्याः सखि सांप्रतं कथमसौ पञ्चाग्नयो दुःसहाः।।

इति।

अत्र हि स्मरशरप्रभृतीनां पञ्चानामध्यारोपितवह्निभावानामसह्यत्वं वाक्यार्थीभूतम्, अतस्तस्य वाच्यता। तात्पर्यालोचनसामर्थ्याच्च विप्रलम्भशृङ्गारस्याक्षेप इत्युपादानात्मिका लक्षणा वाच्यनिबन्धना। न ह्यत्र वक्तृस्वभावपरिशीलनस्य शब्दरहितस्योपयोगः, नापि च वाक्ये पदानां विप्रलम्भशृङ्गाराक्षेपमन्तारेणान्वयोपपत्तिः। न ह्यत्र वक्तृस्वभावपरिशीलनस्य शब्दरहितस्योपयोगः, नापि च वाक्ये पदानां विप्रलम्भशृङ्गाराक्षेपमन्तारेणान्वयोपपत्तिः। वाच्यस्वरूपविचारेण तत्र विप्रलम्भशृंगाराक्षेपादुपादानात्मिका लक्षणा वाच्यनिबन्धना। विप्रलम्भशृङ्गारस्य चाक्षिप्यमाणस्यापि वाच्यापेक्षया प्राधान्यम्, सहृदयहृदयाह्लादहेतुतया प्राधान्येनाक्षेपात्।

'हृद्युन्मादकरा' इत्यत्र सत्यपि शशाङ्करुचीनां स्त्रीत्वे हेतुताच्छील्यनुलोम्यानामविवक्षितत्वात् टप्रत्ययाभावेन अच्प्रत्ययान्तत्वादीकाराभावः। पूर्वं चात्र कर्मसंबन्धस्याविवक्षणात् अण्प्रत्ययस्याभाव इति अच्प्रत्ययः 'शिवशमरिष्टस्य' करे इतिवत्। अत एव हेत्वादिविवक्षायामपि टप्रत्ययाभावाददोषः।

## (सुबोधिनी)

वाच्यनिबन्धनाया उदाहरणं प्रस्तौति **वाच्यनिबन्धने**ति स्पष्टम्। **दुर्वारा** इत्यादि। हे सखि! दुर्वारा माधवो मदनेषवः दिशि दिशि व्याजृम्भते। हृद्युन्मादकराः शशाङ्करुचयः, चेतोहराः कोकिलाः, इदमुत्तुङ्गस्तनभारदुर्धरम्, अन्यत् प्रत्यग्रं वयः। सांप्रतं कथममी दुःसहाः पञ्चाग्नयः सोढव्याः ? इत्यन्वयः। हे सखि! हे आलि! दुर्वारा दुःखेन वारयितुं शक्याः दुस्प्रतिरोध्याः, माधवः मधुमाससंबन्धिनः, मदनेषवः कामशराः पुष्पबाणाः, दिशि दिशि प्रतिदिशं, व्याजृम्भते विशेषेणासमन्ताद् जृम्भते सर्वप्रसरणशालिनो वर्तन्ते। हृद्युन्मादकराः चेतोमोहोत्पादकाः, शशाङ्करुचयः चन्द्रकिरणाः, चेतोहराः मनोहराः कोकिलाः पिकाः, इदं पुरो दृश्यमानम्, उत्तुङ्गः उन्नतो यः स्तनभारः स्तनयोर्भारः तदेव दुर्धरं दुःखेन धारयितुं शक्यं, अन्यद् एतद्भिन्नं प्रत्यग्रं वयः नवीनं वयः यौवनमित्यर्थः। सांप्रतमधुना, अमी एते, दुःसहाः दुर्मर्षाः, पञ्चाग्नयः पञ्च वह्नयः, कथं सोढव्याः सोढुं शक्याः ?

**अत्र ही**ति। अत्र हि दुर्वारा इत्यादौ, स्मरशरप्रभृतीनां कामबाण-शशाङ्ककिरण-कोकिल-स्तनभार-वयसां, पञ्चानामपि, अध्यारोपितवह्निभावानां आरोपिताग्निरूपाणाम्, असह्यत्वं दुःसह्यत्वं, वाक्यार्थीभूतम् वाक्यार्थरूपम्, अतस्तस्य असह्यत्वरूपस्य वाक्यार्थस्य, वाच्यता अभिधीयमानता। तात्पर्यपर्यालोचनसामर्थ्याच्च तात्पर्यपर्यालोचनस्य यत् सामर्थ्यं बलं तस्मात्, विप्रलम्भशृङ्गारस्याक्षेपः विप्रलम्भशृङ्गार आक्षिप्यते इति वाच्यनिबन्धनोपादानात्मिका लक्षणा। प्रकृते वक्तृवाक्यनिबन्धनात्वं निरसितुमाह **न ह्यत्रे**ति। शब्दरहितस्य शब्दमुपेक्ष्य तदर्थमप्युपेक्ष्य, वक्तृस्वभावपरिशीलनस्य वक्तृवैशिष्ट्यपर्यालोचनया, नोपयोगः प्रयोगो नास्तीत्यर्थः, विप्रलम्भशृङ्गाराक्षेपमन्तरेण विप्रलम्भशृङ्गारस्याक्षेपं विना, वाक्ये पदानां वाक्यघटकानां, नान्वयोपपत्तिः नान्वययोग्यता।

**वाच्यस्वरूपविचारेणे**ति। वाच्यस्वरूपविचारेण वाच्यार्थस्वरूपपर्यालोचनया, तत्र विप्रलम्भशृङ्गाराक्षेपादुपादानात्मिका लक्षणा वाच्यनिबन्धनेति स्पष्टम्। **विप्रलम्भशृङ्गारस्ये**ति। आक्षिप्यमाणस्याऽपि विप्रलम्भशृङ्गरस्य मुख्यार्थातिरिक्तस्यापि विप्रलम्भशृङ्गारस्य, वाच्यापेक्षया प्राधान्यमिति स्पष्टम्, सहृदयहृदयाह्लादहेतुतया सहृदयहृदयावर्जकत्वेन, प्राधान्येनाक्षेपात् प्रधानतयाक्षिप्तत्वात्।

**हृद्युन्मादकरा** इत्यादि। 'हृद्युन्मादकरा' इत्यत्र शशाङ्करुचीनां स्त्रीत्वे सत्यपि चन्द्रकिरणानां स्त्रीलिङ्गत्वे सत्यपि, हेतुताच्छील्यानामविवक्षितत्वात् हेतुत्वं ताच्छील्यं चाविवक्षितमिति, 'कृञो हेतुताच्छील्यानुलोम्येषु' इति (३.२.२०)पाणिनिसूत्रबलात्, टप्रत्ययाभावेन टप्रत्ययस्याप्रसंगात्, अच्प्रत्ययान्तत्वात् ईकाराभावः 'हृद्युन्मादकरा' इत्यत्र अच्प्रत्ययान्तत्वात् ईकारप्रसंगाभाव इति 'हृद्युन्मादकरी' इति प्रयोगोऽसिद्धः। अयमर्थः 'हृद्युन्मादकरा' इति पदं शशाङ्करुचयः इत्यस्य स्त्रीलिंगान्तपदस्य विशेषणमस्ति, तथा च 'कृञो हेतुताच्छील्यानुलोम्येषु' इति (३.२.२०)पाणिनिसूत्रबलात् प्राप्तः टप्रत्ययः निषिद्धः हेतुत्वस्य ताच्छील्यस्य आनुलोम्यस्य च विवक्षाभावात्। अत एव टिदन्तत्वाभावात्, 'टिड्ढाणञ्' (४.१.१५) इत्यदिसूत्रप्राप्तः ङीप्-प्रत्ययो बाधितः। तत्स्थाने 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३.१.१३४) इति पाणिनिसूत्रबालात् अच्-प्रत्ययः प्राप्तः हृद्युन्मादकराः इति रूपं च निष्पन्नम्। **पूर्वं चात्रे**ति। पूर्वं च प्रथमञ्च, अत्र 'हृद्युन्मादकरा' इत्यत्र, कर्मसंबन्धस्याविवक्षणात् कर्मसंबन्धस्य विवक्षाभावात्, अण्प्रत्ययाभावः 'कर्मण्यण्' (३.२.१) इति पाणिनिसूत्रेण प्राप्तोऽण्प्रत्ययो निषिद्धः, इति अच्-प्रत्ययः 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३.१.१३४) इति पाणिनिसूत्रबालात् अच्-प्रत्ययः प्राप्तः हृद्युन्मादकराः इति रूपं च निष्पन्नम्, 'शिवशमरिष्टस्य करे' इति (४.४.१४३)

पाणिनिसूत्रेऽपि करोतीति करः कृधातोरच्प्रत्यये सति निष्पद्यते। **अत एवेति**। हेत्वादिविवक्षायामपि अच्-प्रत्ययात्परमत्र हेत्वादिविवक्षायां सत्यामपि टप्रत्ययाभावात् अदोषः दोषाभावः।

## (सङ्गमनी)

वाच्यनिबन्धना लक्षणा को सोदाहरण प्रस्तुत करने के लिए कहते हैं- **वाच्यनिबन्धना तु** इत्यादि। वाच्यार्थवैशिष्ट्या लक्षणा का उदाहरण निम्न श्लोक (दुर्वारा इत्यादि) में है-

हे सखि! मदन के बाणों को रोक पाना कठिन है। सब दिशाओं में वसन्त जम्भाई ले रहा है (फैल रहा है)। हृदय में उन्माद उत्पन्न करने वाले चन्द्रमा के किरण सभी ओर फैल रहे हैं। कोयल के पञ्चम तान चित्त को हर रहे हैं। उन्नत स्तनों के इस भार को वहन करना कठिन हो रहा है। और यह नवयौवन भी है। इन पाँच अग्निओं को कैसे सहा जाय?

यहाँ कामबाण आदि पाँच वस्तु पर अग्नित्व का अध्यारोप किया गया है। इन की असह्यता वाक्य का अर्थ है। अतः इन्हीं कामबाण आदि पाँच वस्तुओं की असह्यता वाच्य अर्थ है। उस वाच्यार्थ के पर्यालोचन के सामर्थ्य से यहाँ विप्रलम्भ शृङ्गार का आक्षेप हो रहा है, इसीलिए यहाँ वाच्यवैशिष्ट्या उपादानलक्षणा है। इस पद्य में शब्दों की अथवा उसके वाच्यार्थ की उपेक्षा करके वक्ता के स्वभाव के पर्यालोचन का उपयोग नहीं है, और न ही विप्रलम्भशृङ्गार के आक्षेप के बिना वाक्य में पदों का अन्वय हो सकता है। वाच्यार्थ के स्वरूप के विचार से विप्रलम्भशृङ्गार के आक्षेप होने से वहाँ वाच्यवैशिष्ट्या उपादानलक्षणा है। यहाँ आक्षिप्त हो कर भी विप्रलम्भशृङ्गार वाच्यार्थ की अपेक्षा प्रधान है, क्योंकि यह विप्रलम्भशृङ्गार के द्वारा ही सहृदयों के हृदय में आनन्दबोध होता है, अतः उसकी वाच्यार्थ की अपेक्षा प्रधानता सिद्ध है।

प्रस्तुत पद्य में हृद्युन्मादकराः इस पद के स्थान पर हृद्युन्मादकर्यः यह प्रयोग क्यों नहीं हुआ है इस का कारण बताते हैं- हृद्युन्मादकराः यह पद जिस के विशेषण के रूप में प्रयुक्त है वह शशाङ्करुचयः (विशेष्य पद) स्त्रीलिङ्ग में होते हुए भी यहाँ हेतु, ताच्छील्य अथवा आनुलोम्य की विवक्षा

न होने से 'कृञो हेतुताच्छील्यानुलोम्येषु' (३.२.२०) इस पाणिनिसूत्र के प्रभाव से ट-प्रत्यय नहीं किया गया है। अतः टिदन्तत्व न होने से 'टिड्ढाणञ्' (४.१.१५) इत्यदि सूत्र से प्राप्त ङीप्-प्रत्यय बाधित हो कर यहाँ हृद्युन्मादकराः यह शब्द अच्प्रत्ययान्त होने से हृद्युन्मादकरी इस मूल शब्द से हृद्युन्मादकर्यः इस प्रकार का प्रयोग असिद्ध हुआ है। यहाँ पहले कर्मसंबन्ध की विवक्षा न होने से 'कर्मण्यण्' (३.२.१) इस पाणिनिसूत्र से प्राप्त अण्प्रत्यय निषिद्ध हो कर हृद्युन्मादं करोतीति हृद्युन्मादकारः यह प्रयोग वाधित हुआ जिस प्रकार 'शिवशमरिष्टस्य करे'(४.४.१४३) इस पाणिनिसूत्र में भी कृधातु से अच्प्रत्यय हो कर करोतीति करः यह प्रयोग निष्पन्न होता है उसी प्रकार यहाँ भी अच्प्रत्यय हो कर हृद्युन्मादकराः यह रूप सिद्ध हुआ है और हृद्युन्मादकर्यः या हृद्युन्मादकाराः ये दोनों प्रयोग वाधित हुए हैं।

(मातृका)

**एवं वक्तृवाक्यवाच्यानामेकैकसमाश्रयेण ये त्रयो भेदा भवन्ति ते तावदुदाहृताः। अन्योऽपि च ये वक्तारं वाक्यवाच्ययोरन्यतरेण संयुज्य, तथा वाक्यं वाच्येन सह समुच्चित्य द्विकभेदास्त्रयः, तथा तत्त्रिकभेदाश्च, वक्तृवाक्यवाच्यानां, त्रयाणामपि परस्परसंयोजनया चैक इत्येवं चत्वारो भेदा दृश्यन्ते, ते स्वबुद्धया षट्प्रकारलक्षणाविषयत्वेन मनीषिभिरुदाहार्याः। तेषां च देशकालावस्थास्वालक्षण्यगत-समस्तव्यस्तभेदप्रपञ्चयोजना लक्ष्येऽन्वेषणीया।**

**तदेवं चतुर्विधो मुख्योऽर्थो निर्णीतः। लक्षणायाः तु षट्प्रकारा उक्ताः।**

(सुबोधिनी)

एवमित्यादि। एवं पूर्वोक्तप्रकारेण, वक्तृवाक्यवाच्यानां वक्ता

च वाक्यं च वाच्यश्च तेषां, एकैकसमाश्रयेण अन्योऽन्यनिरपेक्षतया, ये त्रयो भवन्ति ये त्रिविधाः भवन्ति, ते तावदुदाहृताः तेषामुदाहरणानि प्रदत्तानि। **अन्येऽपि चे**ति। अन्येऽपि ये एतदतिरिक्ताः भेदाः, वक्तारं वाक्यवाच्ययोरन्यतरेण संयुज्य वक्तृवाक्यवैशिष्ट्या वक्तृवाच्यवैशिष्ट्या चेति द्विविधा, तथा वाक्यं वाच्येन सह समुच्चित्य वाक्यवाच्यवैशिष्ट्या लक्षणा, द्विकभेदास्त्रयः द्वयोः द्वयोः समुच्चित्य ये त्रयो भेदा भवन्ति, तथा तत्त्रिकभेदाश्च त्रयाणां ये भेदास्ते, वक्तृवाक्यवाच्यानां त्रयाणामपि परस्परसंयोजनया परस्परसंमिश्रणेन, चैक एकप्रकारकः इत्येवं चत्वारो भेदा दृश्यन्ते विलोक्यन्ते, ते भेदाः, स्वबुद्ध्या निजमनीषया, षट्प्रकारलक्षणाविषयत्वेन पूर्वं प्रतिपादितायाः षट्प्रकारकलक्षणाया आधाररूपेण, मनीषिभिरुदाहार्याः विद्वद्भिरुपज्ञेयाः। **तेषां चे**त्यादि। तेषां च पूर्वोक्तानां लक्षणाभेदानां, देशकालावस्थास्वालक्षण्यगताः देशकालावस्थासु वैलक्षण्यरूपाः समस्तव्यस्तभेदप्रपञ्चयोजनाः सापेक्षनिरपेक्षभेदप्रपञ्चसहिताः, लक्ष्ये अन्वेषणीयाः लक्ष्ये काव्यादौ द्रष्टव्याः।

अभिधाभेदानुपसंहरति **तदेवमि**ति। तदेवं पूर्वोक्तरीत्या, चतुर्विधो मुख्योऽर्थः जाति-गुण-क्रिया-यदृच्छारूपः, नर्णीतः निश्चितः। लक्षणया (लक्षणायास्तु), षट्प्रकारा उपादानलक्षणा-लक्षणलक्षणा-शुद्धोपचारसारोपा-शुद्धोपचारसाध्यवसाना-गौणोपचारसारोपा-गौणोपचारसाध्यवसानारूपा, उक्ताः कथिताः।

## (सङ्क्रमनी)

वक्ता, वाक्य और वाच्य के समस्त और व्यस्त भेदों को दिखलाने हेतु कहते हैं- **एवं वक्तृवाक्ये**त्यादि। इस प्रकार वक्ता, वाक्य और वाच्य में से प्रत्येक के आश्रय से जो तीन भेद होते हैं उनके उदाहरण दिये गये हैं। और भी वक्ता के साथ वाक्य एवं वाच्य को मिलाकर अर्थात् वक्तृ-वाच्य,

वक्तृ-वाक्य और वाच्य-वाक्य इस प्रकार द्विकभेद (युग्मभेद) तीन हैं, तथा वक्ता, वाक्य एवं वाच्य इन तीनों को मिलाकर (त्रिक भेद) एक है, अत: समस्तभेद चार और व्यस्त भेद तीन इस प्रकार सात भेद होते हैं। उनके उदाहरण पूर्वोक्त छ: प्रकार की लक्षणा के विषय के रूप में देखे जा सकते हैं। उनमें भी देश, काल और अवस्था के वैलक्षण्य से समस्त अर्थात् अन्योन्य सापेक्ष रूप में एवं व्यस्त अर्थात् अन्योन्य निरपेक्ष रूप में लक्षणा के भेद अपने अपने लक्ष्यों में देखे जा सकते हैं।

इस प्रकार चार प्रकार का मुख्य अर्थ बताया गया है। लक्षणा के तो छ: भेद कहे गये हैं।

## (मातृका)

{अभिहितान्वयवादादिषु लक्षणा}

**इदानीमभिहितान्वयोऽन्विताभिधानं तत्समुच्चय:, तदुभयाभावश्चेत्येवं ये चत्वार: पक्षास्तेषु लक्षणाया: कक्षाविभागं दर्शयितुमाह-**

**अन्वयेऽभिहितानां सा वाच्यत्वादूर्ध्वमिष्यते।।७।।**
**अन्वितानां तु वाच्यत्वे वाच्यत्वस्य पुर: स्थिता।**
**द्वये द्वयमखण्डे तु वाक्यार्थपरमार्थत:।।८।।**
**नास्त्यसौ कल्पितेऽर्थे तु पूर्ववत् प्रविभज्यते।**

{अभिहितान्वयवाद:}

**इह केषांचिदन्वयव्यतिरेकावसेयसामान्यभूत-स्वार्थमात्रविश्रान्तेषु पदेषु पदार्थाकांक्षासन्निधियोग्यतामहिम्ना वाक्यार्थस्यानभिधेयभूतस्य हर्षशोकादिवदवसेयत्वमेव। यथा हि 'ब्राह्मण पुत्रस्ते जात:' 'ब्राह्मण कन्या ते गर्भिणी'ति यथाक्रमं पुत्रजन्मकन्यागर्भिणीत्वनिमित्तौ हर्षशोकौ स्वशब्देनानभिहितावपि शब्दाभिधेयभूतवस्तुसामर्थ्यादाक्षिप्येते, एवं वाक्यार्थस्या-ऽनभिधेयभूतस्यैव पदार्थाक्षेप्यत्वे द्रष्टव्यम्। एषां चैवंवादिनां**

**मतेनार्थानामभिहितानामुत्तरकालं परस्परान्वयादभिहितान्वयः।**

## (सुबोधिनी)

**इदानीमि**त्यादि। इदानीम् अधुना, अभिहितान्वयोऽन्विताभिधानं, तत्समुच्चयः, तदुभयाभावश्चेत्येवं ये चत्वारः पक्षास्तेषु लक्षणायाः कक्षाविभागं भिन्नस्वरूपं, दर्शयितुमाह-

**अन्वयेऽभिहिताना**मिति। अभिहितानामन्वये सा वाच्यत्वादूर्ध्वमिष्यते। अन्वितानां तु वाच्यत्वे (सा) वाच्यत्वस्य पुरःस्थिता। द्वये द्वयम्। अखण्डे तु वाक्यार्थपरमार्थतः असौ नास्ति। पूर्ववत् कल्पितेऽर्थे तु (सा) प्रविभज्यते। **इत्यन्वयः**। अभिहितानामन्वये अभिहितान्वयवादे यत्र अभिधाव्यापारेण प्रतिपादितानां पदार्थानां परस्परं सम्बन्धः स्थाप्यते तत्र, सा लक्षणा, वाच्यत्वात् वाच्यार्थात्, ऊर्ध्वमिष्यते पूर्वं भवति। अन्वितानां तु वाच्यत्वे अन्विताभिधानवादे तु यत्रान्वितानामेव पदार्थानामभिधाव्यापारेण बोधो भवति तत्र, (सा लक्षणा) वाच्यत्वस्य पुरः स्थिता वाच्यार्थात् पूर्वं भवति। द्वये अभिहितान्वयान्विताभिधानोभयवादे समुच्चयवादे वा द्वयं परमपि पूर्वमपि सा लक्षणा भवति। अर्थात् समुच्चयवादे यत्राभिहितानां पदानामन्वयो भवति तत्र पदार्थरूपवाच्यार्थप्रतीतेः परं लक्षणाप्रसक्तिर्भवति तथा च यत्रान्वितानामेव पदार्थानामभिधाव्यापारेण बोधो जायते तत्र वाक्यार्थरूपवाच्यार्थप्रतीतेः पूर्वमेव लक्षणाप्रसक्तिः भवतीति सारः। अखण्डे तु अखण्डवाक्यार्थवादे (उभयाभाववादे) तु यत्र पदपदार्थकल्पनं विनैव अविभक्तवाक्यात् अविभक्तवाक्यार्थः प्रतीयते तत्र, वाक्यार्थपरमार्थतः वाक्यार्थस्य पारमार्थिकत्वात् वाक्यार्थमतिरिच्यान्यस्यार्थस्य सत्ताभावात्, असौ लक्षणा, नास्ति न विद्यते। वैयाकरणैः प्रतिष्ठितेऽस्मिन्नखण्डार्थवादे पदपदार्थकल्पना नैव भवति, पदे न वर्णविभाजनं भवति, न वा वर्णेऽवयवानां स्वतन्त्रसत्ता

भवति, तथैव वाक्येऽपि पदानां स्वातन्त्र्यं नैव विद्यते। तदुक्तं भर्तृहरिणा वाक्यपदीये -

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।

(वाक्यपदीयं, ब्रह्मकाण्डं,२७२)

तथा च तेनैवोक्तं -

ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः।।

(वाक्यपदीयम्, २.१४)

उपायाः शिक्ष्यमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।

(वाक्यपदीयम्, २.२४०)

अयमर्थः यथा ब्राह्मणकम्बलम् इति पदे ब्राह्मणपदस्य आनर्थक्यं विद्यते तथा वाक्येऽपि पदानां कश्चिद्भिन्नोऽर्थो नैव विद्यतेऽपि तु समष्टिरूपेण वाक्यार्थ एवावबुध्यते।। ननु वैयाकरणैरेव प्रतिपदं प्रकृतिप्रत्ययादिविभागः क्रियते तत् कथमखण्डवाक्यार्थवादिनस्त उच्यन्ते? अत एवोच्यते तैः शाखा अरुन्धतीन्यायेन बालानां शिक्षणाय पूर्वमसत्यमार्गे स्थित्वा परं सत्यसमीहा क्रियते। पदपदार्थरूपासत्यार्थकल्पनपूर्वकमखण्ड-वाक्यार्थरूपसत्यसन्धानं क्रियते। पूर्ववत् कल्पितेऽर्थे तु अभिहितान्वयवादान्विताभिधानवादतत्समुच्चयवादेषु कल्पितेष्वेवार्थेषु, (सा लक्षणा) प्रविभज्यते वाच्यार्थपूर्वापरतया संभाव्यते।

**इह केषांचिदिति**। इह अत्र, केषांचित् कतिपयानां मतमित्यर्थः, अन्वयव्यतिरेकाभ्याम् अवसेयाः निश्चेया ये सामान्यभूताः स्वार्थास्तन्मात्रे विश्रान्तेषु विरतेषु पदेषु, पदार्थानाम् आकांक्षा च सन्निधिश्च योग्यता च तासां महिम्ना, अनभिधेयभूतस्य वाक्यार्थस्य वाच्यार्थव्यतिरिक्तस्य वाक्यार्थस्य, हर्षशोकादिवत् सुखदुःखादिवत्, अवसेत्वमेव निश्चेय्यमेव।

अयं भावः केषांचित् (अभिहितान्वयवादिनां मतेन) यदा पदानि स्वार्थबोधनात्परं विश्रान्तानि भवन्ति तदाऽऽकांक्षासन्निधियोग्यतावशात् परस्परमन्वितानि सन्ति तानि वाच्यार्थव्यतिरिक्तं वाक्यार्थं बोधयन्ति। तदेवोदाहर्तुमाह **यथा ही**ति। यथा हि उदाहरणतः, 'ब्राह्मण पुत्रस्ते जातः' 'ब्राह्मण कन्या ते गर्भिणी'ति वाक्याभ्यां, यथाक्रमं क्रमानुसारं, पुत्रजन्मकन्यागर्भिणीत्वनिमित्तौ हर्षशोकौ पुत्रजन्मकन्यागर्भिणीत्वे निमित्ते ययोस्तौ हर्षशोकौ सुखदुःखे, स्वशब्देनानभिहितावपि स्वशब्देनाकथितावपि, वस्तुसामर्थ्यात् पदार्थरूपवस्तुबलाद्, आक्षिप्येते आक्षेपाल्लभ्येते, एवं तद्वत्, अनभिधेयभूतस्यैव वाक्यार्थस्य अभिधाव्यापारव्यतिरिक्तेनैव व्यापारान्तरेण प्रतीतस्य वाक्यार्थस्य, पदार्थाक्षेप्यत्वे पदार्थद्वारा प्रतीयमानत्वरूपे प्रकृते द्रष्टव्यम्। **एषामि**ति। एषां चैवंवादिनां मतेनार्थानामभिहितानामुत्तरकालं अभिहितानां पदार्थानां परं परस्परान्वयात् परस्परसंबन्धात् अभिहितान्वयः इति स्पष्टम्।

**(सङ्गमनी)**

अभिहितान्वयवाद आदि में लक्षणा का स्थान दिखलाने हेतु कहते हैं- **इदानीमभिहितान्वयः** इत्यादि। अभी अभिहितान्वय, अन्विताभिधान, उन दोनों का समुच्चय (समस्तरूप), एवं उन दोनों का अभावरूप स्थलों में लक्षणा का क्षेत्र बताने के लिए कहते हैं-

**(कारिका)** अभिहित पदार्थों के अन्वय अर्थात् अभिहितान्वयवाद में वह (लक्षणा) वाच्यार्थ से पहले होती है। अन्वित पदार्थों को वाच्य मानने में अर्थात् अन्विताभिधानवाद में लक्षणा वाच्य अर्थ से पहले होती है। उभय अभिहितान्वयवाद एवं अन्विताभिधानवाद में लक्षणा दोनों होते हैं अर्थात् वाच्य के वाद भी और वाच्य के पहले भी होती है। अखण्डवाक्यार्थवाद में तो पद-पदार्थ स्वीकृत न होने से केवल वाक्यार्थ ही परमार्थ होने से लक्षणा होती ही नहीं। उस अखण्डवाक्यार्थवाद में भी पदपदार्थ की कल्पना करने से पहले की तरह अर्थात् लक्षणा की सत्ता अभिहितान्वयवाद को मानने पर वाच्य अर्थ के बाद होती है और अन्विताभिधानवाद को मानने पर

वाच्यार्थ से पहले होती है। यह अखण्डवाक्यार्थवाद जो कि भर्तृहरि जैसे वैयाकरणों का सिद्धान्त है; उनका कहना है कि पद में वर्णों का विभाग नहीं हो सकता और न ही वर्णों में अवयवों की स्वतन्त्र सत्ता होती है। वैसे ही वाक्य में भी पदों की स्वतन्त्र सत्ता होती है। जैसे ब्राह्मणकम्बल इस पद में कम्बलार्थ के अलावा ब्राह्मणपद का ब्राह्मणत्वरूप कोई भिन्न अर्थ नहीं होता है उसी प्रकार वाक्य में देवदत्त आदि पदार्थों की भिन्न रूप में कोई सत्ता नहीं रहती है। अब यह प्रश्न हो सकता है कि व्याकरण शास्त्र के अनुसार ही पदों में प्रकृति-प्रत्ययादि का विभाजन किया जाता है, तो कैसे अखण्डवाक्यार्थवाद सिद्ध होगा? इसके उत्तर में कहा गया है कि जैसे असत्य मार्ग में रह कर सत्य मार्ग का अन्वेषण किया जाता है, उसी प्रकार पद-पदार्थरूप खण्डकल्पना से अखण्ड वाक्यार्थ का बोध होता है।

कारिका का व्याख्यान करते हुए अभिहितान्वयवाद को स्पष्ट करने हेतु वृत्ति में करते हैं- **इह केषांचित्** इत्यादि। यहाँ कुछ लोगों का यह मत है कि- पदों का पदार्थों के साथ अन्वय-व्यतिरेकभाव संबन्ध होने से वे (पद) अपने अपने अर्थों को प्रतिपादित करके विश्रान्त हो जाने पर आकांक्षा, योग्यता और सन्निधि के बल से पदार्थों के परस्पर अन्वय (संबन्ध) से जो वाक्यार्थ होता है, वह अनभिहित होकर प्रतीत होता है, जैसे कि 'ब्राह्मण पुत्रस्ते जातः' (हे ब्राह्मण! आपका पुत्र उत्पन्न हुआ।), 'ब्राह्मण कन्या ते गर्भिणी' (हे ब्राह्मण! आपकी कन्या गर्भवती हुई।) इत्यादि वाक्यों में हर्ष और शोक अनभिहित हैं। 'ब्राह्मण पुत्रस्ते जातः' 'ब्राह्मण कन्या ते गर्भिणी' इन दोनों वाक्यों में क्रमशः पुत्र का जन्म होना और कन्या के गर्भिणी होने के कारण खुसी और दुःख अपने वाचक शब्दों से न कहे जाते हुए भी शब्द के वाच्यार्थ रूप वस्तु के सामर्थ्य से आक्षिप्त होते हैं। इस प्रकार वाक्यार्थ जो कि अनभिहित है वह भी पदार्थों के (परस्पर अन्वय) द्वारा आक्षिप्त होता है। इसी तरह मत व्यक्त करने वालों के मत से अभिहित पदार्थों के बाद (वाक्यार्थ की प्रतीति के लिए) परस्पर अन्वय होने से अभिहितान्वय है।

## (मातृका)

{अन्विताभिधानवादः}

**अपरे त्वाहुः- वृद्धव्यवहाराच्छब्दार्थसंबन्धावसायः। स च वृद्धव्यवहारः प्रवृत्तिनिवृत्तिरूपः। प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे। अतो विशिष्ट एवार्थे पदानां संबन्धावधृतिः। ततश्च विशिष्टा एव पदार्थाः, न तु पदार्थानां वैशिष्ट्यम्। एवं च परस्परान्वितानां तत्तत्सामान्याऽवच्छादितत्वेन गृहीतस्ववाचकसंबन्धानां पदैः प्रत्यायनादन्विताभिधानमिति।**

## (सुबोधिनी)

अन्विताभिधानवादिनां मतं प्रतिपादयितुमाह **अपरे त्वाहुः** इति। अपरेऽन्विताभिधानवादिनः, आहुः अवोचन्, वृद्धव्यवहाराच्छब्दार्थसंबन्धावसायः वृद्धानां प्रयोगज्ञानां व्यवहारात् प्रयोगात् शब्दार्थयोः संबन्धस्य अवसायः निश्चयो भवति। **स चेति**। स च वृद्धव्यवहारः वक्त्रादिगतव्यवहारः प्रवृत्तिनिवृत्तिरूपः क्वचित् वृद्धव्यवहारद्वारा संप्रत्ययेन प्रवृत्तिर्जायते क्वचिच्च निवृत्तिर्जायते। **प्रवृत्तिनिवृत्ती** इति। प्रवृत्तिश्च निवृत्तिश्च ते, विशिष्टार्थनिष्ठे व्यवहारयोग्यविशिष्टार्थाधारिते, न तु वाच्यार्थसामान्याधारिते। **अत** इति। अतः प्रवृत्तिनिवृत्त्योर्विशिष्टार्थनिष्ठत्वात्, विशिष्टार्थे व्यवहारयोग्यार्थे एव पदानां संबन्धावधृतिः पदानां संबन्धनिश्चयो भवति। **ततश्चेति**। ततश्च तस्माच्च, विशिष्टा एव पदार्थाः अन्वयविशिष्टा एव पदार्थाः, न तु पदार्थानां वैशिष्ट्यं पदार्थानां नान्वय इत्यर्थः। **एवं परस्परान्वितानामिति**। एवं च तथा च, परस्परान्वितानां परस्परं संबद्धानां पदानामित्यर्थः, तत्तत्सामान्यावच्छादितत्वेन स्वस्वसामान्यार्थैः अवच्छिन्ना भूत्वा, गृहीतस्ववाचकसंबन्धानां गृहीताः स्ववाचकसंबन्धा यैस्तेषां पदानामित्यर्थः, पदैः प्रत्यायनात् पदद्वारा ज्ञानाद्

अन्विताभिधानमिति। अयमर्थः प्रथमं कर्तृकर्मक्रियादित्वेनान्वितानां पदानामेवार्थ अभिधाबोध्य इति वाक्यार्थ एव वाच्य इत्युच्यते, ततश्च तानि तानि वाक्यघटकानि पदानि सामान्यावच्छादितत्त्वेन स्वार्थं (पदार्थं) बोधयन्तीति सारः।

**विशेषः** - अन्विताभिधाने वृद्धव्यवहारद्वारा शब्दार्थसंबन्धोऽवगम्यते। स च वृद्धव्यवहारः कीदृगिति प्रश्नः समुदेति। उच्यते - उत्तमवृद्धः (वक्ता), मध्यमवृद्धः (प्रतिपत्ता), अधमवृद्धः (श्रोता) चेति त्रयोऽपि एकस्मिन्नेव काले समान एव स्थाने वर्तन्ते। तत्रोत्तमवृद्धः मध्यमवृद्धाय 'गाम् आनय' इति वाक्यमुच्चार्य तदनुसारं कर्तुमादिशति। मध्यमवृद्धः (प्रतिपत्ता) तदर्थमवगम्य तदनुसारमाचरति। परमधमवृद्धः (बालः) तत्तत्पदार्थं नैव जानाति, तथाप्यसौ उत्तमवृद्धप्रयुक्ताद् 'गाम् आनय' इति वाक्याद् गवानयनरूपक्रियासमभिव्याहारेण संपूर्णं वाक्यार्थमवगच्छति। ततश्च स एवोत्तमवृद्धो 'गाम् बधान' इति वदति, मध्यमवृद्धश्च तथा करोति। ततश्च स एवोत्तमवृद्धः 'अश्वमानय' इति वदति मध्यमवृद्धश्च तदनुसारमाचरति। अधमवृद्धः (बालः) तत्सर्वमभिपश्यति तथा चैतद् वाक्यत्रयं श्रुत्वा तत्समभिव्याहृतक्रियाश्च विलोक्य वाक्यार्थावगमनेन सह 'गाम् आनय' इति वाक्यात् 'गाम् बधान' चेति वाक्यात् गामित्यस्यार्थमानयेत्यस्यार्थञ्चाभिजानाति। ततश्च पूर्वज्ञानसहकारेण 'अश्वमानय' इति वाक्यात् अश्वपदार्थमप्यवगच्छति। एतस्मादुदाहरणाद् ज्ञायते यत् प्रथमं अन्वितपदार्थरूपो वाक्यार्थ एवावगम्यते, ततश्च तस्य आगमनात्मकतर्कद्वारा (Inductive Logic) पदार्थबोधो जायते।

**(सङ्गमनी)**

अन्विताभिधानवाद को स्पष्ट करने हेतु कहते हैं- **अपरे त्वाहुः** इत्यादि। वृद्धव्यवहार से अर्थात् पारंपरिक प्रयोगों को जानने वाले विद्वानों

के व्यवहार से शब्द एवं अर्थ का संबन्ध निश्चित होता है। वह वृद्धव्यवहार प्रवृत्ति एवं निवृत्ति रूप है। अर्थात् जहाँ जहाँ लाक्षणिक प्रयोगों में प्रवृत्ति होती है वह वृद्धव्यवहार से अनुमत है और जहाँ जहाँ लाक्षणिक प्रयोगों से निवृत्ति होती है वह वृद्धव्यवहार से अनुमत नहीं है। प्रवृत्ति और निवृत्ति विशिष्ट अर्थ के आधार पर ही होती है (न कि सामान्य अर्थ के आधार पर)। इसीलिए विशिष्ट अर्थ में ही पदों का संबन्ध निश्चित होता है। इसीलिए जो विशिष्ट (अन्वितरूप) अर्थ वही पंदार्थ है, न कि पदार्थों के अन्वय रूप वैशिष्ट्य। और परस्पर में अन्वित पदार्थ जब सामान्य अर्थ से अवच्छिन्न हो कर पदार्थ का बोध कराते हैं तब उन सामान्य अर्थों के साथ पदों का वाचकत्व संबन्ध गृहीत होता है। अर्थात् पहले कर्तृ-कर्म-क्रिया आदि रूप में अन्वित पदों का अर्थ (वाक्यार्थ रूप विशिष्टार्थ) अभिधाव्यापार से बोध्य है। उसके वाद वाक्य में विद्यमान वे सभी पद सामान्य से अवच्छिन्न हो कर पदार्थ को बोधित करते हैं।

**विशेष :** अन्विताभिधान में वृद्धव्यवहार से शब्द एवं अर्थ के बीच संबन्ध का ज्ञान होता है। यहाँ प्रश्न ऊठता है कि वृद्धव्यवहार क्या है? उत्तर है - उत्तमवृद्ध (वक्ता), मध्यमवृद्ध (प्रतिपत्ता), और अधमवृद्ध (श्रोता) ये तीन एक ही काल में एक ही स्थान में हैं। उत्तमवृद्ध मध्यमवृद्ध से 'गाम् आनय' अर्थात् गाय को लाओ यह कह कर आदेश देता है। मध्यमवृद्ध (प्रतिपत्ता) उस का अर्थ को समझकर उस के अनुसार आचरण करता है। परन्तु अधमवृद्ध (बाल) उन उन पदों के अर्थों को न जानते हुए भी उत्तमवृद्ध के द्वारा प्रयुक्त 'गाम् आनय' इस वाक्य से गवानयनरूप क्रिया के दर्शन से वाक्यार्थ को समझता है। उसके बाद वही उत्तमवृद्ध 'गां बधान' अर्थात् गाय को बाँधो यह बोलता है, और मध्यमवृद्ध वैसा करता है। उस के बाद वह उत्तमवृद्धः 'अश्वमानय' अर्थात् घोडे को लाओ यह बोलता है और मध्यमवृद्ध तदनुसार आचरण करता है। अधमवृद्ध (बाल) वह सब कुछ सामने देखता है और इन तीनों वाक्यों को सुन कर एवं उन उन क्रियाओं को प्रत्यक्ष देख कर वाक्यार्थ के बोध के साथ 'गाम् आनय' इस वाक्य से और 'गां बधान' इस वाक्य से गाम् इस पद के अर्थ को और

आनय इस पद के अर्थ को जानता है। ततः पूर्वज्ञान की सहायता से 'अश्वम् आनय' इस वाक्य से अश्वपदार्थ को भी समझता है। इस उदाहरण प्रक्रिया से मालूम पडता है कि पहले पदार्थों का अन्वित रूप (विशिष्ट) वाक्यार्थ का ज्ञान होता है और उस के बाद आगमनात्मक तर्क से (Inductive Logic) पदों के अर्थ (सामान्य अर्थ) का बोध होता है।

(मातृका)

{अभिहितान्वयान्वितार्भिधानवादयोः समुच्चयः}

**अन्येषां तु मते पदानां तत्तत्सामान्यभूतो वाच्यार्थः, वाक्यस्य तु परस्परान्विताः पदार्था इति पदापेक्षयाभिहितान्वयः, वाक्यापेक्षया तु अन्विताभिधानम्। एवं चैतयोरभिहितान्वयान्विताभिधानयोः समुच्चयः इति।**

(सुबोधिनी)

**अन्येषा**मिति। अन्येषाम् अपरेषां तु मते, पदानां तत्तत्सामान्यभूतो वाच्योऽर्थः पदार्थाः सामान्याः वाच्याश्च भवन्ति। वाक्यस्य तु परस्परान्विताः पदार्थाः परस्परमन्विताः पदार्थाः वाक्यार्थ इत्युच्यते। अतएव पदापेक्षयाऽभिहितान्वयः पदार्थस्यापेक्षायान्तु अभिहितान्वयः, वाक्यापेक्षया तु अन्विताभिधानम् पदार्थापेक्षां विना साक्षात् वाक्यार्थापेक्षायान्तु अन्विताभिधानम्। एवं चैतयोरभिहितान्वयान्विताभिधानयोः समुच्चयः इति स्पष्टम्। अयमर्थो यत्र प्रथमं पदार्थापेक्षा भवति तद्द्वारेणैव वाक्यार्थावबोधो जायते तदा अभिहितान्वयः। यत्र तु पदार्थनिरपेक्षया वाक्यार्थबोधो भवति तदाऽन्विताभिधानमिति फलितम्। वैयाकरणसरण्या त्वन्विताभिधानमेव न्याय्यम् अभिहितान्वयस्तु काल्पनिकः। वयन्तु वदामो यदभिहितान्वयवाद आलंकारिकविचारसरणिमनुसरति, तत्र पदार्थानामपि व्यञ्जकत्वेन स्वीकारात्।

## (सङ्गमनी)

अभिहितान्वय और अन्विताभिधानवाद इन दोनों के समुच्चय को बाताने हेतु कहते हैं- **अन्येषां मते तु** इत्यादि। कुछ अन्य विद्वानों का कहना है कि पदार्थ सामान्य और वाच्य होते हैं, जब कि वाक्यार्थ पदार्थों का अन्वितरूप है। इसीलिए जहाँ पदार्थों की अपेक्षा होती है वहाँ अभिहितान्वय है और जहाँ वाक्यार्थ की अपेक्षा होती है वहाँ अन्विताभिधान। इसी प्रकार जहाँ पदार्थ एवं वाक्यार्थ इन दोनों की अपेक्षा रहती है वहाँ समुच्चयवाद मानना चाहिए। तात्पर्य यह है कि जहाँ पहले पदार्थ की अपेक्षा होती है और उस के माध्यम से वाक्यार्थ का बोध होता है वहाँ अभिहितान्वय है और जहाँ पदार्थों की अपेक्षा के बिना ही वाक्यार्थ का बोध होता है वहाँ अन्विताभिधान है। और उभय पदार्थ एवं वाक्यार्थ की अपेक्षा रहने पर समुच्चयवाद होता है।

## (मातृका)

### {अखण्डवाक्यार्थवाद}

**अखण्डवाक्यार्थवादिनस्त्वाहुः - विशिष्टस्य वस्तुनो वाक्यार्थत्वेऽभ्युपगम्यमाने विशेषस्यानन्वितत्वेन तद्विपरीतसामान्यविरुद्धत्वान्न परमार्थस्वभावसामान्यभूतार्थाऽवच्छादितरूपतया विशेषाणां स्ववाचकैः संबन्धग्रहणमुपपद्यते। अतः परमार्थतो वाक्यवाक्यार्थयोरखण्डत्वान्नाभिहितान्वयो नाप्यन्विताभिधानम्, न च तत्समुच्चयो युज्यते, पदार्थानामविद्यमानत्वात्, कल्पितपदार्थनिष्ठत्वेनोभयमपि व्यस्तसमस्तरूपतया कल्प्यत इति।**

## (सुबोधिनी)

**अखण्डवाक्यार्थवादिन** इति। अखण्डवाक्यार्थवादिनो वैयाकरणा आहुः अवोचन्, विशिष्टस्य वस्तुनो वाक्यार्थत्वेऽभ्युपगम्यमाने यदा स्वीक्रियते यद् वाक्यार्था विशिष्टा एव भवन्तीति तदा, विशेषस्यानन्वितत्वेन विशेषो न सामान्यानामन्वितरूप इति,

तद्विपरीतसामान्यविरुद्धत्वात् विशेषः तद्विपरीतं यत्सामान्यं तद्विरुद्धत्वात् विशिष्टस्य वाक्यार्थस्येति भावः, विशेषाणां सामान्यभूतार्थावच्छादितरूपता एव परमार्थो यः स्वभावस्तेन कारणेन, स्ववाचकैः संबन्धग्रहणं विशेषाणां वाक्यार्थानां स्ववाचकैः पदार्थैः सह संबन्धो नोपपद्यते न युज्यते। **अतः परमार्थत** इति। अतः अस्मात् कारणात्, परमार्थतो वास्तवेन, वाक्यवाक्यार्थयोरखण्डत्वात्, नाभिहितान्वयो नान्विताभिधानं, न च तत्समुच्चयो युज्यते संभवति, अखण्डवाक्यार्थवादे पदार्थानामविद्यमानत्वात्, कल्पितपदार्थनिष्ठत्वेनोभयमपि अभिहितान्वयवादान्विताभिधान-वादोभययोरपि कल्पितपदार्थाधारत्वात्, व्यस्तसमस्तरूपतया स्वतन्त्रत्वेन समुच्चयत्वेन चोभयमपि कल्प्यते इति स्पष्टम्। अयमर्थोऽभिहितान्वयवादस्याऽन्विताभिधानवादस्य तदुभयसमुच्चयवादस्य च पदार्थनिष्ठत्वमिति, अखण्डवाक्यार्थवादस्य पदार्थनिष्ठत्वाभावाच्च तत्स्वीकारे तानि न संभवन्ति।

## (सुगमनी)

अखण्डवाक्यार्थवाद को बताने हेतु कहते हैं- **अखण्डवाक्यार्थवादिनस्त्वाहुः** इत्यादि। अखण्डवाक्यार्थवादी कहते हैं कि विशिष्ट वस्तु को वाक्यार्थ मानने पर विशेष के अनन्वित होने से और वह विशेष अपने विपरीत जो सामान्य है उसके विरुद्ध होने से विशेषों का सामान्यभूत अर्थों से अवच्छिन्न होना उनका परमार्थस्वभाव होने से, विशेषों का अपने वाचक पदों से संबन्ध नहीं घटता है। अतः परमार्थतः वाक्य और वाक्यार्थ के अखण्ड होने से न तो अभिहितान्वय, न अन्विताभिधान और न ही उनका समुच्चयरूप माना जा सकता है, क्यों कि अखण्डवाक्यवाक्यार्थवाद में पदार्थों की सत्ता नहीं रहती है। यदि उस अखण्डवाक्यवाक्यार्थवाद में भी पदार्थों की कल्पना की जाय तब अभिहितान्वय और अन्विताभिधान ये दोनों हो सकते हैं। तात्पर्य यह है कि

अभिहितान्वयवाद, अन्विताभिधानवाद तथा समुच्चयवाद में पदार्थों की सत्ता माननी पडती है, जब कि अखण्डवाक्यवाक्यार्थवाद में पदार्थों की सत्ता ही नहीं रहती है। अतः अखण्डवाक्यवाक्यार्थवाद में उन तीनों का अभाव माना गया है।

(मातृका)

{अभिहितान्वयवादादिपक्षचतुष्टये लक्षणायाः कक्षाविभागः}

**तत्र च यदा तावदभिहितान्वयः तदा स्ववाचकैरभिहितानां पदार्थानामभिहितोत्तरकालम् आकांक्षायोग्यतासन्निधिमाहात्म्याद् विशेषणविशेष्यभावात्मके परस्परान्वये सति सा लक्षणा पदार्थानां सामान्यभूतानां यद् वाच्यत्वं तस्मादूर्ध्वं वाक्यार्थे पदार्थसामार्थ्यादवगम्यमाने सतीष्यते।**

**अन्विताभिधानपक्षे त्वन्वितानां विशिष्टानामेव पदार्थानां 'वाच्यत्वम्' अभिधेयत्वम्, न तु पदार्थानां सामान्यभूतत्वेनाभिहितानां वैशिष्ट्यम्। तत्र विशिष्यमाणानां वस्तूनां पदार्थत्वं तावन्न घटते, यावत् सकलवाक्यार्थानुयायितया प्रतिपन्नस्याव्यभिचरित-स्व-वाचकसंबन्धस्य सामान्यरूपस्य निमित्तभूतस्यार्थस्य संप्रत्यये सति तत्तद्वाक्यार्थविषयतया यथाविषयं षट्प्रकारा लक्षणा नाविर्भवति। अतोऽन्विताभिधाने विशिष्टानां पदार्थानां वाक्यार्थस्वभावानां यद् वाच्यत्वं तस्य 'पुरः' तस्मात् पूर्वं निमित्तावस्थायां लक्षणावस्थिता।**

**अभिहितान्वयान्विताभिधानसमुच्चये तु पूर्वोदितन्यायद्वितयसंकलनया पदापेक्षया वाच्यत्वोत्तरकाल-भाविनी लक्षणा भवति, (वाक्यापेक्षया च) वाक्यार्थोत्तरकालं तस्याः (वाच्यत्वात्) पूर्वमवस्थानम्। तदिदमुक्तं 'द्वये द्वय'मिति। 'द्वये' अभिहितान्वयान्विताभिधानसमुच्चयात्मके**

**'द्वयं' वाच्यत्वादूर्ध्वं, प्राग्भावश्च लक्षणाया इत्यर्थः।**

**अखण्डे तु वाक्यार्थेऽसौ लक्षणा परमार्थेन नास्ति। भिन्नानां पदार्थानां परमार्थतोऽभिधेयभावस्यानुपपद्यमानत्वात्, तदाश्रितत्वाच्च लक्षणायाः। कल्पितपदार्थाश्रयेण तु सा लक्षणा यथारुचि पूर्ववदभिहितान्वयान्विताभिधानतत्समुच्चयकल्पनया विभक्तव्यभागे निवेश्या परस्परस्य देशकालावच्छेदेनाशेषव्यवहर्तृनिष्ठतया रूढत्वात्।**

**एवमभिहितान्वयादिपक्षचतुष्टये लक्षणायाः कक्षाविभागो निरुपितः।**

**(सुबोधिनी)**

**तत्र चे**ति। तत्र च यदा तावदभिहितान्वयस्तादा अभिहितान्वयस्थले, स्ववाचकैः वाच्यार्थः निजवाचकपदैः, अभिहितानां पदार्थानाम् अभिधाव्यापारेण प्रतीतपदार्थानाम्, अभिहितोत्तरकालम् वाच्यात्परम्, आकांक्षायोग्यतासन्निधिमाहात्म्यात् आकांक्षादिवशात्, विशेषणविशेष्यभावात्मके परस्परान्वये सति पदार्थवाक्यार्थयोर्मध्ये विशेषणविशेष्यभावात्मकसम्बन्धे प्रतिष्ठिते सति, सामान्यभूतानां जातिस्वरूपाणां पदार्थानां, यद्वाच्यत्वम् यदभिधेयत्वम्, तस्मादूर्ध्वं, पदार्थसामार्थ्यादवगम्यमाने सति पदार्थबलाद् बोध्यमाने सति, सा लक्षणा ईष्यते कांक्ष्यते। अयं भावः अभिहितान्वये यदा पदार्थाभिधानात्परं आकांक्षादिवशाद्वाक्यार्थप्रतीतौ लक्षणायाः प्रसंगो भवतीत्यर्थः।

**अन्विताभिधानपक्षे** इति। अन्विताभिधानपक्षे तु, विशिष्टानामेवान्वितानां पदार्थानां कर्तृक्रियादिरूपेणान्वितानां पदार्थानां वाच्यत्वम् पदार्थान्वयात्परमेवाभिधाव्यापारप्रसक्तिः, न तु सामान्यभूतत्वेनाभिहितानां वैशिष्ट्यम् पदार्थसामान्यानां बोधात्परं नान्वय इति। **तत्रे**ति। तत्रान्विताभिधाने, विशिष्यमाणानां वस्तूनां विशिष्टानां वस्तूनां, पदार्थत्वं तावन्न घटते पदार्थता तावन्न संभवति, यावत् यदवधि,

प्रतिपन्नस्य प्राप्तस्य, अव्यभिचरितस्ववाचकसंबन्धस्य नास्ति व्यभिचारः स्वस्य पदार्थस्य वाचकत्वसंबन्धे यस्य तस्य (यस्य पदार्थस्य स्ववाचकपदैः सह नित्यसंबन्धो वर्तते तस्य), सामान्यरूपस्य अविशिष्टस्य जात्यात्मकस्य वा निमित्तभूतस्यार्थस्य कारणभूतार्थस्य, सकलवाक्यार्थानुयायितया संपूर्णवाक्यानुगमकत्वेन, संप्रत्यये संम्यग्ज्ञाने सति, तत्तद्वाक्यार्थविषयतया तत्तद्वाक्यार्थविषयत्वेन, यथाविषयं यथावसरं, षट्प्रकारा लक्षणा नाविर्भवति षट्प्रकारकलक्षणाया नाविर्भावो जायेत। अयमर्थः इयं जिज्ञासा मनस्यायाति - अन्विताभिधाने सामान्यवाक्यार्थस्तु वाच्यो विशिष्टवाक्यार्थः कथमवबुध्येत ? उच्यते तत्र लक्षणां विना विशिष्टवाक्यार्थबोधो न जायते, तत्प्रतीतेः कारणं हि लक्षणा। सान्तरार्थनिष्ठत्वं लक्षणात्वमित्युक्तं पूर्वम्। अत एवान्विताभिधाने घटानयनरूपविशिष्टार्थमभिप्रेत्य यदि वस्तु आनयेति उच्येत तदा प्रतिपत्ता वक्तुराशयं नावगच्छेत्, यद्यपि सामान्यवस्तुपदेन सर्वेषां विशिष्टानां घटपटादीनां वस्तूनां बोधो भवति। अथवा **गौरनुबन्ध्यः** इति कथनेन गोपदात् सामान्यतया गोजातेरेवार्थः प्रतीयते गोव्यक्तेर्बोधः कथं स्यात् ? अत एव सामान्ये संकेतेन संप्रत्ययो न भवति। तत्र च वाच्यस्य गोत्वजातेः सिद्ध्यर्थं लक्षणाऽऽश्रयणीया भवति। तेन लक्षणाद्वारा गोव्यक्तिरूपोऽर्थोऽवबुध्यते ततश्च **गौरनुबन्ध्य** इति वाच्यस्य सिद्धिः अतोऽत्र वाच्यस्य गोत्वजातेः सिद्ध्यर्थं लक्षणाया आवश्यकत्वात् लक्षणाऽत्र निमित्तभूता। विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे इति न्यायात् विशिष्टाया गोव्यक्तेः पदार्थत्वं साधयितुं लक्षणाऽवश्यमाश्रयणीयेति मुकुलभट्टस्याशयः। अतएव तेनोक्तं **तत्र विशिष्यमाणानां पदार्थत्वं तावन्न घटते यावत् .......यथाविषयं षट्प्रकारा लक्षणा नाविर्भवति** इति। **अत** इति। अतः एतस्मात् कारणात्, अन्विताभिधाने वाक्यार्थस्वभावानां विशिष्टानां पदार्थानां यद्वाच्यत्वं वाच्यरूपवाक्यार्थबोधात्परं पदार्थानां यद्वाच्यत्वं, तस्य पुरः

तस्मात् पूर्वं, निमित्तावस्थायां कारणावस्थायां, लक्षणावस्थिता लक्षणायाः स्थितिरित्यर्थः। अयमर्थोऽन्विताभिधाने यदा सामान्यार्थबोधात्परं विशिष्टार्थबोधो भवति तदा तत्र संबन्धः परिकल्प्यते, स च संबन्धः लक्षणां विना नैव संभवति। तदा च लक्षणाया आश्रयणमपेक्षते। अत एवात्राभिधाया निश्चयार्थं वाक्यस्य विशिष्टवाच्यार्थबोधात्पूर्वं लक्षणाऽपेक्षते। अत एवायमत्र सारो यत् **गामानय** इत्यादिवाक्ये सामान्येन कर्मत्वादिना संबन्धेनान्वितस्य गोत्वजातिरूपस्य पदार्थस्य वाच्यत्वं भवतु नाम, गात्वजात्यन्तर्भूतानां सकलानां गोव्यक्तीनामेकत्रानयनं न संभवमिति विशिष्टाया गोव्यक्तेर्बोधं विना वाच्यभूतः वाक्यार्थो नैव युज्यत इति तदर्थं लक्षणाऽऽश्रयणीया।

**अभिहितान्वयान्विताभिधानसमुच्चये** इति। पूर्वोदितन्यायद्वितयसंकलनया पूर्वकथितदृष्टान्तद्वयसम्मिश्रणेन पदापेक्षया (अभिहितान्वयवादे यत्र प्रथमं पदार्थानां वाच्यत्वं तत्र), वाच्यत्वोत्तरकालभाविनी लक्षणा भवति पदार्थरूपवाच्यप्रतीतेरुत्तरकाले लक्षणा भवति। (वाक्यापेक्षया चान्विताभिधानवादे) वाक्यार्थोत्तरकालं सामान्यवाक्यार्थबोधात्परं, तस्याः लक्षणायाः (वाच्यत्वात् विशिष्टवाक्यरूपवाच्यात्) पूर्वमवस्थानं पौर्वकालिक्यवस्थितिरित्यर्थः। **तदिदमुक्त**मिति। द्वये अभिहितान्वयान्विताभिधानसमुच्यात्मके, द्वयं वाच्यत्वात् पदार्थरूपवाच्यार्थात्, ऊर्ध्वं परं, प्राग्भावश्च विशिष्टवाक्यार्थबोधाच्च पूर्वस्थितिर्लक्षणाया इति स्पष्टम्।

**अखण्डे त्विति**। अखण्डे तु वाक्यार्थे यत्र पदार्थप्रतीतिं विनैव वाक्यार्थप्रतीतिर्भवतीति मन्यते तत्र, असौ लक्षणा परमार्थेन नास्ति तस्याः लक्षणायाः वास्तविकी सत्ता न भवति। **भिन्नानां पदार्थाना**मिति। तत्राखण्डवाक्यार्थवादे भिन्नानां पदार्थानां परमार्थतोऽभिधेयभावस्यानुपपद्यमानत्वात् अखण्डवाक्यार्थ-'व्यतिरिक्तत्वेन पदार्थसत्ताया अभावात्, लक्षणायाश्च तदाश्रितत्वात्

पदार्थाश्रितत्वात् लक्षणायाः। अयमर्थः लक्षणा हि वाचकपदवाच्यार्थयोरुत्तरभाविनी सान्तरार्थनिष्ठा लक्षणेत्युक्ता, तेन तस्याः पदार्थाश्रितत्वं सिद्धयति, न चाखण्डवाक्यार्थवादे पदपदार्थकल्पना संभवति, अत एव तत्र लक्षणायाः पारमार्थिकी स्थितिर्नास्ति। **कल्पितपदार्थाश्रयेणे**ति। कल्पितपदार्थाश्रयेण तु अखण्डवाक्यार्थवादेऽपि यदि पदपदार्थकल्पना क्रियेत तदा, पूर्ववत् पूर्वोक्तानुसारम्, अभिहितान्वयान्विताभिधानतत्समुच्चयकल्पनया एतात्त्रितयपरिकल्पनया, परस्परस्य अन्योऽन्यस्य देशकालावच्छेदेनाशेषव्यवहर्तृनिष्ठतया तत्तद्देशकालानुसारं सकलव्यवहर्तृ़णामाश्रितत्वेन, रूढत्वात् प्रसिद्धत्वात् (लक्षणायाः), यथारुचि रुच्यनुसारं, विभक्तव्यभागे विभक्तव्यो यो भागस्तस्मिन् यथावसरं पदार्थे वा वाक्यार्थे वा तत्समुच्चये वा, निवेश्या प्रयोज्या। अयं भावः अखण्डवाक्यार्थवादेऽपि यदि कल्पितत्वेन पदपदार्थविभाजनं क्रियेत तदा व्यवहर्तृ़णां रुच्यनुसारं यथावसरं लक्षणायास्तत्तद्भेदाः प्रयोक्तुं शक्येरन्, यतो हि न भवतु वा पारमार्थिकी सत्ता लक्षणायाः, व्यवहारे तु दृश्यत एव।

**एवमभिहिता**दि। एवमुक्तप्रकारेण,अभिहितान्वयादिपक्षचतुष्टये अभिहितान्वयेऽन्विताभिधाने तत्समुच्चये तदुभयाभावात्मकेऽखण्डवाक्यार्थवादे चेति चतुर्षु पक्षेषु, लक्षणायाः कक्षाविभागो निरूपितः लक्षणास्थितिर्निर्धारितेति।

## (सङ्गमनी)

अभिहितान्वयवाद आदि चारों पक्षों में लक्षणा का कक्षाविभाग करने हेतु कहते हैं- **तत्र च यदा** इत्यादि। उन चारों पक्षों में से जब अभिहितान्वयवाद माना जाता है तब अपने अपने वाचक पदों के द्वारा पदार्थों का अभिधान होने के अनन्तर आकांक्षा, योग्यता और सन्निधि के प्रभाव से उन पदार्थों में विशेषणविशेष्य भाव की स्थापना पूर्वक परस्पर

अन्वय होकर वाक्यार्थ की प्रतीति होती है। इस वाक्यार्थप्रतीति के समय वाधप्रतीति होनें पर अथवा सामान्यभूत पदार्थों का जो वाक्यार्थ है उससे भिन्न वाक्यार्थ के भान होने पर लक्षणा व्यापार (लाक्षणिक अभिधा व्यापार) की अपेक्षा पडती है।

अन्विताभिधानवाद पक्ष में अन्वितविशिष्ट पदार्थ ही वाच्य अर्थात् अभिधेय होते हैं, न कि सामान्य पदार्थों से विशिष्ट वाक्यार्थ का बोध होता है। इस पक्ष में विशिष्ट वस्तुओं का पदार्थ होना तब तक नहीं घटित होता है जब तक सकल वाक्य के अनुयायी के रूप में अव्यभिचरितरूप से अपने वाचक के निमित्तभूत सामान्य अर्थ की प्रतीति होने के अनन्तर उन उन वाक्यार्थों के लिए अपेक्षित षड्विध लक्षणाओं में से अन्यतम लक्षणा का उदय न हो जाता हो। अभिप्राय यह है कि अन्विताभिधानवादिओं के मत में अर्थ तो सामान्यरूप होता है। किन्तु प्रवृत्ति और निवृत्ति के हेतुभूत वाक्यार्थ सामान्यरूप न हो कर विशिष्टरूप होता है; और उस विशिष्टार्थ का बोध लक्षणा के बिना नहीं हो सकता है। उनके मत में चूँकि अभिधेयार्थ वाक्यार्थरूप ही होता है, पदार्थरूप नहीं, अतः वाक्यार्थ की प्रतीति के पूर्व लक्षणा की आवश्यकता निमित्तरूप में अनिवार्यतः अपेक्षित होती है। अतः अन्विताभिधानवाद पक्ष में वाक्यार्थ की स्थिति में पदार्थों का जो विशिष्टरूप स्वभाव है, अर्थात् विशिष्टरूप पदार्थ की प्रतीति के पूर्व ही लक्षणा निमित्तभूत अवस्था में रहती है।

अभिहितान्वयवाद और अन्विताभिधानवाद के समुच्चय को स्वीकार करने वालों के मत में पूर्वोक्त दोनों मतों का संकलन होने के कारण पदों की अपेक्षा से वाच्यार्थ की प्रतीति के अनन्तर एवं वाक्य की अपेक्षा से वाक्यार्थ की प्रतीति के पूर्व लक्षणा होती है। इसीलिए कारिका में कहा गया है 'द्वये द्वयम्' अर्थात् समुच्चयवाद में पदों द्वारा वाच्यार्थ की प्रतीति के पश्चात् एवं वाक्यद्वारा वाक्यार्थ की प्रतीति के पूर्व, इस प्रकार वाच्यार्थ की प्रतीति से पूर्व और पश्चात् दोनों अवस्थाओं में लक्षणा की सत्ता अवश्य रहती है।

अखण्ड वाक्य द्वारा अखण्ड वाक्यार्थ की प्रतीति को मानने पर

परमार्थतः लक्षणा की कोई आवश्यकता नहीं पडती है। क्यों कि इस पक्ष में भिन्न भिन्न पदार्थ अभिधेय माने ही नहीं जाते हैं, जब की लक्षणा पदार्थों पर ही आश्रित रहा करती है। पदार्थों की काल्पनिक सत्ता मानने पर वह लक्षणा की अपेक्षा अवश्य रहती है। इस प्रकार चाहे अभिहितान्वयवाद को मानों या अन्विताभिधानवाद को अथवा दोनों के समुच्चयवाद को या छोटे छोटे पदों और पदार्थों की काल्पनिकता को अपनी रुचि के अनुसार स्वीकार करें, देश, काल और अवस्था आदि के भेद से यथावसर सभी व्यवहारकर्ताओं (वाग्व्यापार के प्रयोगकर्ताओं में) लक्षणा रहती है।

इस प्रकार अभिहितान्वयवाद आदि चारों पक्षों में लक्षणा का स्थान निरूपित है।

## (मातृका)

{लक्ष्यमाणार्थस्य पञ्चविधमुख्यार्थासन्नत्वम्}

**एवमभिहितान्वयादिपक्षचतुष्टये लक्षणाया, यत्रमुख्यार्थासम्भवस्तत्र मुख्यार्थासन्नवस्तुविषयां, सति प्रयोजने, प्रवृत्तिमुपदर्शयितुमाह -**

**मुख्यार्थासंभवात्सेयं मुख्यार्थासत्तिहेतुका।।९।।**
**रूढेः प्रयोजनाद्वापि व्यवहारे विलोक्यते।**

**या चेयं षट्प्रकारा लक्षणा पूर्वमुक्ता सा-**

**१. मुख्यार्थस्य प्रमाणान्तरबाधितत्वेनासंभवात्,**

**२. लक्ष्यमाणस्य चार्थस्य मुख्यार्थं प्रति आसन्नत्वात्,**

**३. सान्तरार्थग्रहणस्य च सप्रयोजनत्वात्,**

**इत्येवंविधकारणत्रितयात्मकसामग्रीसमाश्रयणेन वृद्धव्यवहारे परिदृश्यते। यच्च तत् मुख्यार्थासन्नत्वं तत् पञ्चप्रकारतयाचार्यभर्तृमित्रेण प्रदर्शितम्**

**अभिधेयेन संबन्धात् सादृश्यात् समवायतः।**
**वैपरीत्यात् क्रियायोत्ल्लक्षणा पञ्चधा मता।। इति श्लोकेन।**

**तेन प्रयोजनस्यापि द्वैविध्यम्। किञ्चिद्धि सान्तरार्थपरिग्रहे प्रयोजनम् अनादिवृद्धव्यवहारप्रसिद्ध्यनुसरणात्मकत्वाद् रूढ्यनुवृत्तिस्वभावं, यथा द्विरेफादौ। द्विरेफशब्देन हि रेफद्वितययोगितया भ्रमरशब्दलक्षणाद्वारेण रूढ्यनुवृत्तिरेव क्रियते। अपरं तु रूढ्यनुसरणात्मकं यत् प्रयोजनमुक्तं तद्व्यतिरिक्तवस्त्वन्तरगतस्य संविज्ञानपदस्य रूपविशेषप्रतिपादनं नाम, यथा पूर्वमुदाहृतं 'रामोऽस्मी'ति।**

**एतच्च प्रयोजनद्वितयं मुख्यार्थासंभवे सति मुख्यार्थप्रत्यासन्नतया पूर्वोपदर्शितेन संबन्धपञ्चकेनावगम्यमाने लाक्षणिकेऽर्थे यथाविषयमनुसर्तव्यम्।**

## (सुबोधिनी)

**एव**मिति। एवं पूर्वोक्तप्रकारेण, अभिहितान्वयादिपक्षचतुष्टये अभिहितान्वयेऽन्विताभिधाने तत्समुच्चये तदुभायाभावात्मकेऽखण्डवाक्यार्थवादे चेति चतुर्षु पक्षेषु, यत्र मुख्यार्थासंभवस्तत्र मुख्यार्थानुपपत्तौ, प्रयोजने सति प्रयोजनविशेषस्य सद्भावात्, लक्षणायाः मुख्यार्थासन्नवस्तुविषयां प्रवृत्तिं मुख्यार्थसंबद्धलक्ष्यार्थप्रतिपादनम्, उपदर्शयितुं प्रदर्शयितुम् लक्षयितुं वाऽऽह।

**मुख्यार्थासंभवात्सेय**मिति। मुख्यार्थासंभवात् मुख्यार्थासत्तिहेतुका सेयं (लक्षणा) रूढेः प्रयोजनाद्वापि व्यवहारे विलोक्यते इत्यन्वयः। मुख्यार्थासंभवात् मुख्यार्थानुपपत्तेः, मुख्यार्थासत्तिहेतुका मुख्यार्थेन सह (लक्ष्यार्थस्य)आसत्तिः हेतुः यस्याः सा वाच्यार्थसंबन्धनिमित्ता, सेयं लक्षणा, रूढेः प्रसिद्धिवशात्, प्रयोजनाद्वापि प्रयोजनद्वारा वा, व्यवहारे प्रयोगे, विलोक्यते दृश्यते।

**या चेय**मिति। या चेयं षट्प्रकारा लक्षणा पूर्वमुक्ता उपादानलक्षणा-लक्षणलक्षणा-शुद्धासारोपा-शुद्धासाध्यवसाना-

गौणीसारोपा-गौणीसाध्यवसानेति षट्प्रकारा पूर्वं प्रतिपादिता लक्षणा, साऽसौ -१. मुख्यार्थस्य वाच्यार्थस्य, प्रमाणान्तरबाधितत्वेनासंभवात् प्रमाणान्तरेण वाच्यार्थस्यानुपपद्यमानत्वेनासंभवात्, २. लक्ष्यमाणस्य चार्थस्य मुख्यार्थं प्रति आसन्नत्वात् मुख्यार्थलक्ष्यार्थयोः संबन्धात्, ३. सान्तरार्थग्रहणस्य च सप्रयोजनत्वात् व्यवहितार्थग्रहणस्य (लक्ष्यार्थग्रहणस्य) प्रयोजनयुक्तत्वात्, इत्येवंविधकारणत्रितयात्मक-सामग्रीसमाश्रयणेन वृद्धव्यवहारे परिदृश्यते एवंप्रकारककारणत्रयात्मक-सामग्रीद्वारा वृद्धव्यवहारे लक्षणा परिदृश्यते विलोक्यते। **यच्चेति**। यच्च तत् मुख्यार्थासन्नत्वं तत् मुख्यार्थलक्ष्यार्थयोर्यः संबन्धोऽसौ, पञ्चप्रकारतयाचार्यभर्तृमित्रेण प्रदर्शितं पञ्चविधत्वेनाचार्यभर्तृमित्रेणोक्तम् - **अभिधेयेने**ति। अभिधेयेन वाच्येन सह, संबन्धात् सामान्यसंबन्धात्, सादृश्यात् सादृश्यधर्मयुक्तत्वात्, समवायात् नित्यसंबन्धात्, वैपरीत्यात् वैपरीत्यसंबन्धात्, क्रियायोगाच्च क्रियागतधर्मस्य संबन्धाच्च, लक्षणा पञ्चधा मतेति स्पष्टम्।

**तेन प्रयोजनस्यापी**ति। प्रयोजनस्यापि द्वैविध्यं सान्तरार्थग्रहणस्य सप्रयोजनत्वात् इति यदुक्तं तस्य प्रयोजनस्यापि द्विप्रकारत्वमिति। **किञ्चिद्धी**ति। सान्तरार्थपरिग्रहेऽव्यवहितार्थस्वीकारे, किञ्चित्प्रयोजनमेकं कारणं, अनादिवृद्धव्यवहारप्रसिद्ध्यनुसरणात्मकत्वाद् अनादिकालाद् वृद्धव्यवहारे या प्रसिद्धिस्तदनुसरणात्मकत्वाद्, रूढ्यनुवृत्तिस्वभावं रूढिमूलमिति, यथा द्विरेफादौ द्विरेफादिशब्दे। द्वौ रेफौ रकारौ यस्यासौ द्विरेफ इति रकारद्वयसहिताः समेऽपि शब्दा वाच्याः, परं द्विरेफपदेन तु भ्रमर इत्येव पदं गृह्यते, तत्र च कारणं रूढिः प्रसिद्धिर्वा। तदेव स्पष्टीकर्तुमाह **द्विरेफशब्देने**ति। रेफद्वितययोगितया रेफद्वयेन संबद्धत्वाद्, भ्रमरशब्दलक्षणाद्वारेण भ्रमरशब्दस्य या लक्षणा तद्द्वारा, द्विरेफशब्देन, रूढ्यनुवृत्तिरेव क्रियते रूढेः प्रसिद्धेः, अनुवृत्तिरेवानुसरणमेव, क्रियते विधीयते। **अपरं त्वित्यादि**। अपरं तु

रूढ्यनुसरणात्मकं यत्प्रयोजनमुक्तं सान्तरार्थग्रहणस्य रूढिमूलं यत्प्रयोजनं प्रतिपादितं, तद्व्यतिरिक्तवस्त्वन्तरगतस्य तद्भिन्नस्य पदार्थान्तरस्य, संविज्ञानपदस्य संविज्ञानं पदम् आस्पदं यस्य तस्य रूपविशेषस्य विशिष्टस्वरूपस्य, प्रतिपादनं नाम कथनं नाम प्रयोजनमिति, यथा रामोऽस्मीति अत्र रामपदेन अतिकष्टसहिष्णुत्वादिधर्मयुक्तस्य रामस्येति रामपदस्य स्वभावः संविज्ञानास्पदः। **एतच्चेति**। एतच्च प्रयोजनद्वितयं हेतुद्वयं रूढिः प्रयोजनञ्चेति, मुख्यार्थासंभवे सति वाच्यार्थानुपपत्तौ सति, मुख्यार्थप्रत्यासन्नतया मुख्यार्थं प्रति आसन्नतया सम्बद्धत्वेन, पूर्वोपदर्शितेन संबन्धपञ्चकेन पूर्वप्रतिपादितैः पञ्चभिः संबन्धैः संबन्धसादृश्यसमवायवैपरीत्यक्रियायोगरूपैः, अवगम्यमाने लाक्षणिकेऽर्थे अवबोध्यमाने लक्ष्येऽर्थे, यथाविषयमनुसर्तव्यं यथावसरमनुसन्धेयमिति। अयमर्थः मुख्यार्थेऽनुपपन्ने सति, मुख्यार्थलक्ष्यार्थयोः समवायाद्यन्यतरसंबन्धे सति, रूढेः प्रयोजनाद्वा लक्षणाया व्यवहारो भवतीति।

## (सङ्क्रमनी)

लक्ष्यमाण अर्थ का मुख्यार्थ के साथ जो संबन्ध होता है उसके पाँच भेद बताते हैं- **एवमभिहितान्वयादिपक्षचतुष्टये** इत्यादि। इसी प्रकार अभिहितान्वयवाद आदि जो चार पक्ष बताए गये हैं उनमें जब मुख्यार्थ अनुपपन्न होता है तब किसी न किसी प्रयोजन (कारण) विशेष के होने पर मुख्यार्थ से आसन्न (संबद्ध) वस्तु की प्रतीति के लिए लक्षणा की प्रवृत्ति को बतलाने हेतु कहते हैं-

**(कारिका)** मुख्यार्थ की अनुपपत्ति होने पर मुख्यार्थ के साथ संबन्ध रखनेवाली लक्षणा (मुख्यार्थ के साथ संबन्ध जिसका हेतु है) वह रूढि (प्रसिद्धि) या प्रयोजनविशेष के रहने पर व्यवहार में दिखती है।

कारिका की व्याख्या करते हैं- **या चेयम्** इत्यादि। यह जो छः प्रकार की लक्षणा पहले बतायी गई है,(१) मुख्यार्थ के अनुपपन्न (असंगत)

हो कर बाधित होने से, (२) लक्ष्यमाण अर्थ का मुख्यार्थ के साथ संबद्ध होने से और (३) सान्तरार्थ (लक्ष्यार्थ) के ग्रहण में प्रयोजनविशेष के होने से; इस प्रकार इन तीनों कारणों के रहने से लक्षणा पारंपरिक (वृद्ध) व्यवहार में दिखती है। लक्षणा का जो मुख्यार्थ के साथ संबन्ध है वह पाँच प्रकार का है ऐसा आचार्य भर्तृमित्र ने कहा है; जैसे कि-

(कारिका) अभिधेय या वाच्य अर्थ के साथ संबन्ध (सामान्यसंम्बन्ध) से, सादृश्य से, समवाय (नित्य संबन्ध) से, वैपरीत्य (विपरीत संबन्ध) से एवं क्रिया के योग से; इस तरह लक्षणा पाँच प्रकार की होती है।

सान्तरार्थ (लक्ष्यार्थ) के ग्रहण में प्रयोजनविशेष के होने से; इस प्रकार जो लक्षणा का तीसरा कारण बताया गया है, उस प्रयोजनविशेष के दो भेद होते हैं; उनमें से प्रथम अनादि काल से वृद्ध व्यवहार से जो प्रसिद्धि दिखती है उसका अनुपालनात्मक रूढि; जैसे कि द्विरेफ आदि। द्विरेफ का वाच्य अर्थ दो रेफ (रकार) वाला। दो रेफ वाले शब्द तो असंख्य हो सकते हैं प्रखर, प्रकर, प्रभार इत्यादि। परन्तु द्विरेफ शब्द केवल भ्रमर (मधुकर/षट्पद) में ही शाब्दी लक्षणा से रूढ है। द्वितीय प्रकार का प्रयोजन वह है, जहाँ अनुपद पूर्वोक्त रूढ्यनुसरणात्मक प्रयोजन से भिन्न वस्त्वन्तर में विद्यमान विशिष्टरूप में ज्ञात धर्मरूपी स्वरूप विशेष का प्रतिपादन होता है। जैसे कि पूर्वोदाहृत पद्य 'स्निग्धश्यामल' आदि पद्य में 'रामोऽस्मि' इति।

इन दोनों प्रयोजनों में से किसी भी एक का अनुसरण वहाँ किया जाता है, जहाँ मुख्य अर्थ संभव न हो पा रहा हो तथा पूर्व वर्णित पाँच संबन्धों में से अन्यतम का आश्रयण करके प्रतीत होने वाले लाक्षणिक अर्थ में किसी पद या वाक्य का प्रयोग किया जाता है। अर्थात् मुख्यार्थ के बाधित होने पर, मुख्यार्थ एवं लक्ष्यार्थ के बीच में किसी संबन्ध के रहने पर, रूढि या प्रयोजन से लक्षणा का व्यवहार होता है।

(मातृका)

{संबन्धसादृश्यसमवायलक्षणाः}

तत्र संबन्धलक्षणा यथा - 'गङ्गायां घोष' इति। अत्र हि गङ्गाशब्दाभिधेयस्य स्रोतोविशेषस्य घोषाधिकरणत्वानुपपत्त्या मुख्यशब्दार्थबाधे सति योऽसौ समीपसमीपिभावात्मकः संबन्धस्तदाश्रयेण तटं लक्षयति। अत्र च लक्षणायाः प्रयोजनं तटस्य गङ्गात्वैकार्थसमवेतासंविज्ञानपदपुण्यत्वमनोहरत्वादिप्रतिपादनम्। न हि तत् पुण्यत्वमनोहरत्वादि स्वशब्दैः स्प्रष्टुं शक्यते, अव्याप्त्यतिव्याप्तिप्रसंगात्।

सादृश्यलक्षणायामुदाहरणम् -

भ्रमर भ्रमता दिगन्तराणि क्वचिदासादितमीक्षितं श्रुतं वा।
वद सत्यमपास्य पक्षपातं यदि जातिकुसुमानुकारि पुष्पम्।।

अत्र हि भ्रमरपुष्पशब्दौ संबोधनान्यथानुपपत्त्या बाधितमुख्यार्थावभिधेयसादृश्यात् तद्गतगुणसदृशगुणप्रयुक्तमर्थान्तरं लक्षणयावगमयतः। प्रयोजनं चात्र भ्रमरत्वपुष्पत्वैकार्थसमवेतक्रियागुणसदृशानामसंविज्ञानपदानां क्रियागुणानां प्रतिपादनम्।

समवायतो लक्षणा यथा - 'छत्रिणो यान्ती'ति। अत्र बहुवचनप्रयोगान्मुख्यशब्दार्थबाधः। न ह्येकस्मिंश्छत्रिणि बहुवचनस्य प्रयोग उपपद्यते, अतोऽत्र गमनलक्षणायां क्रियायां छत्रिणा सह योऽसौ छत्रशून्यानां समवायः साहचर्यम्, तद्वशात् छत्रिपदेन छत्रशून्या अपि लक्षणयाऽवगम्यन्ते। प्रयोजनं चात्र छत्रशून्यानां सर्वात्मना छत्रोपेतस्वाम्यनुयायितया प्रतिपादनम्।

(सुबोधिनी)

तत्र संबन्धलक्षणेति। संबन्धलक्षणामुदाहर्तुमाह 'गङ्गायां घोष'

इति गङ्गाप्रवाहे आभीरपल्लीविशेषः इति वाच्योऽर्थः। **अत्र हीति**। अत्र 'गङ्गायां घोष' इत्यत्र, गङ्गाशब्दाभिधेयस्य गङ्गाशब्दस्य योऽभिधेयः वाच्यस्तस्य, स्रोतोविशेषस्य प्रवाहविशेषस्य, घोषाधिकरणत्वानुपपत्त्या घोषस्याधिकरणत्वं घोषाधारत्वं तस्यानुपपत्त्या उपपत्त्यभावात्, मुख्यशब्दार्थबाधे सति बाधितवाच्यार्थे सति, योऽसौ समीपसमीपिभावात्मकः संबन्धः तदाश्रयेण तटं लक्षयति वाच्यगङ्गाप्रवाहलक्ष्यतत्तटयोः सामीप्यसंबन्धात् तटार्थः लक्ष्यते इत्यर्थः। **अत्र चेति**। अत्र च प्रकृते, लक्षणायाः प्रयोजनं, तटस्य लक्ष्यार्थस्य, गङ्गात्वैकार्थसमवेतासंविज्ञानपदपुण्यत्वमनोहरत्वादिप्रतिपादनं गङ्गात्वैकार्थे वाच्यमात्रार्थे समवेतम् आश्रितं युक्तं वा, असंविज्ञानपदं तटे चाविदितधर्मविशेषं यत् पुण्यत्वमनोहरत्वादि पावनत्वरमणीयत्वादि तत्प्रतिपादनम्। **न हि तत्पुण्यत्वेत्यादि**। तत्पुण्यत्वमनोहरत्वादि स्वशब्दैः वाचकशब्दैरित्यर्थः, स्प्रष्टुं न शक्यते प्रतिपादनायोग्यमित्यर्थः। **अव्याप्त्यतिव्याप्तिप्रसंगाद्** इति। अव्याप्तिर्नाम लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वम्। लक्ष्यं तटं, लक्ष्यता तटे, तदवच्छेदकं तटत्वं, तत्समानाधिकरणे विद्यमानो योऽत्यन्ताभावः पुण्यत्वाद्यभावः तस्य प्रतियोगि पुण्यत्वम्। अयमर्थो यदि पुण्यत्वरूपं लक्ष्यमुद्दिश्य तटपदं प्रयुज्येत तदा पुण्यत्वरहिते सामान्यतटे तटपदस्याव्याप्तिः स्यादित्येवं लक्ष्यैकदेशे लक्षणावृत्तित्वादव्याप्तिर्नाम दोषः। अतिव्याप्तिर्नाम लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदसामानाधिकरण्यम्। लक्ष्यं तटं, लक्ष्यता तटे, तदवच्छेदकं तटत्वं, तत्समानाधिकरणत्वे सति तटसमानाधिकरणत्वे सति, लक्ष्यता तटे, तदवच्छेदकं तटत्वं, तेनावच्छिन्नं तटं, तत्प्रतियोगिताकभेदः तटेतरः पुण्यत्वादिः पदार्थः, तत्समानाधिकरण्यम्। अयमर्थः यदि तटपदेन सह पुण्यत्वादेरपि बोधः

स्यात्तदा लक्ष्यवृत्तित्वे सति अलक्ष्ये लक्षणसत्त्वरूपातिव्याप्तिः स्यात्।

**सादृश्यलक्षणायामिति**। सादृश्यलक्षणोदाह्रियते। **भ्रमरेति**। भ्रमर! पक्षपातमपास्य सत्यं वद। दिगन्तराणि भ्रमता क्वचित् आसादितम्, ईक्षितं श्रुतं वा? यदि जातिकुसुमानुकारि पुष्पम् (अस्ति)। इत्यन्वयः। हे भ्रमर! हे षट्पद! पक्षपातमपास्य कस्मिंश्चिदेकस्मिन् पक्षे पतनं त्यक्त्वा, सत्यं यथार्थं, वद ब्रूहि। दिगन्तराणि दिशां प्रान्तभागान्, भ्रमता भ्रमणं कुर्वता (त्वया), क्वचित् कुत्रचित्, आसादितं प्राप्तं, ईक्षितं विलोकितं, श्रुतं वा अथवाऽऽकर्णितम्? जातिकुंसुमानुकारि जातिकुसुमम् अनुकर्तुं शीलमस्यास्तीति, पुष्पमस्ति यदि सुमनमस्ति चेत्? प्रस्तुते पद्ये कश्चित् पुरुषः कयाचित् कुट्टिन्या भ्रमरपदेन संबोध्य कस्याश्चित् नवयौवनाया वेश्यायाः वक्षोजयोरग्रभागौ जातिकुसुमपदेन लक्षितौ तदीयवक्षोजयोः माध्यमेन तत्सौन्दर्यस्यानन्यत्वं प्रसश्यते।

**अत्र हीति**। अत्र भ्रमरेत्यादौ, भ्रमरपुष्पशब्दौ भ्रमरशब्दश्च पुष्पशब्दश्च, संबोधनान्यथानुपपत्त्या यद्विना संबोधनस्योपपत्तिर्न जायते, बाधितमुख्यार्थौ बाधितौ अनुपपन्नौ मुख्यार्थौ षट्पदपुष्पविशेषरूपौ वाच्यार्थौ ययोस्तौ भ्रमरवत्तिर्यक्प्राणिनः संबोधनासंगत्या, अभिधेयसादृश्यात् वाच्यार्थगतगुणसदृशगुणदर्शनात्, तद्गतगुणप्रयुक्तमर्थान्तरं तद्गता ये गुणास्तत्प्रयुक्तम् अर्थान्तरं, लक्षणया लक्षणाव्यापारेण, अवगमयतः बोधयतः। **प्रयोजनं चात्रेति**। प्रकृते लक्षणायाः प्रयोजनं दर्शयति भ्रमरत्वपुष्पत्वैकार्थसमवेतक्रियागुणसदृशानां भ्रमरत्वार्थपुष्पत्वार्थमात्रसमवेताः याः क्रियाः ये च गुणाः तत्सदृशानां, असंविज्ञानपदानां अज्ञातार्थपदानां, क्रियागुणानां क्रियाणां गुणानाञ्च, प्रतिपादनं बोधनम्। अयमर्थः न हि कश्चित् सचेता भ्रमरसदृशतिर्यक्प्राणिनामेवभूतं पुष्पविषयकार्थे संबोधनं करोतीति भ्रमरपुष्पशब्दौ बाधितमुख्यार्थौ भ्रमरगतसर्वत्रभ्रमणरूप-क्रियासदृशक्रियायुक्तं कमपि पुरुषार्थं

पुष्पगतवर्तुलत्वादिगुणसदृशगुणयुक्तं नायिकास्तनार्थं लक्षणया बोधयतः।

**समवायतो लक्षणे**ति। समवायसंबन्धा लक्षणा निरूप्यते। **छत्रिणो यान्तीति**। छत्रधारिणो गच्छन्तीति वाच्यार्थः। **अत्रे**ति। अत्र 'छत्रिणो यान्ती'त्यत्र, बहुवचनप्रयोगात् एकस्मिन् छत्रधारिव्यक्तौ गच्छति 'छत्रिणो यान्ती'ति बहुवचनप्रयोगात्, मुख्यशब्दार्थबाधः बह्वर्थकमुख्यशब्दार्थबाधः प्रकृते एकस्यैव छत्रयुक्तत्वात्। **न ही**ति। एकस्मिंश्छत्रिणि छत्रधारिणः एकत्वसंख्यावच्छिन्ने सत्यपि, बहुवचनस्य प्रयोगो बहुत्वसंख्याया उपयोगः, नोपपद्यते नैव घटते। **अतोऽत्रे**ति। अतः अस्मात् कारणात्, गमनलक्षणायां क्रियायां गमनं लक्षणं यस्याः क्रियायाः तस्यां, छत्रिणा सह छत्रधारिणा सह, छत्रशून्यानां छत्ररहितानां, योऽसौ समवायः साहचर्यं साहावस्थितिरिति, तद्वशात् समवायवशात्, छत्रिपदेन छत्रशून्या अपि लक्षणयाऽवगम्यन्ते छत्रिपदद्वारा छत्ररहिता अपि जना लक्षणाव्यापारेण बुध्यन्ते। **प्रयोजनं चात्रे**ति। अत्र च प्रयोजनं प्रकृते प्रयोजनं, छत्रशून्यानां छत्ररहितानां, सर्वात्मना सर्वतोभावेन, छत्रोपेतस्वाम्यनुयायितया छत्रयुक्तस्वामिनोऽनुयायित्वेन, प्रतिपादनं बोधनम्। अयमर्थः कश्चित् स्वामी छत्रयुक्तो गच्छति। अन्ये च तदनुयायिनः छत्ररहिताः सन्तः तमनुसरन्ति। तं च छत्ररहितैरनुस्त्रियमाणं छत्रिणं दृष्ट्वा केनचिदुच्यते 'छत्रिणो यान्ती'ति। अतोत्र मुख्यार्थबाधः। ततश्च समवायसंबन्धेन छत्ररहिता अपि लक्षणया गृह्यन्ते। तत्रैकस्मिन्नपि छत्रिणि बहुत्वप्रयोगस्य प्रयोजनं छत्रशून्यानां सर्वात्मना छत्रोपेतस्वस्वाम्यनुयायित्वप्रतिपादनमिति स्पष्टम्।

**(सङ्क्रमनी)**

संबन्धमूला लक्षणा को सोदाहरण बताने हेतु कहते हैं- **तत्र संबन्धलक्षणा** इत्यादि। उन पाँच सन्निधि (संबन्धों) के कारण होनेवाली लक्षणा से जहाँ संबन्ध (सामान्य संबन्ध) से लक्षणा होती है उसका उदाहरण

'गङ्गायां घोषः' यह अर्थात् गङ्गा प्रवाह में गाँव (वस्ती) है। यहाँ गङ्गाशब्द का अभिधेय अर्थ जो प्रवाहविशेष है वहाँ घोष (वस्ती) का आधार होना संभव न होने से मुख्यार्थ के वाधित होने पर समीपसमीपिभावरूप संबन्ध के आश्रय से तट (तीर) लक्षित होता है। यहाँ लक्षणा का प्रयोजन गङ्गात्व रूप एक अर्थ के साथ ही रहनेवाला जो कि तट में असंविज्ञात (प्रतीत न होने वाला) पुण्यत्व एवं मनोहरत्व आदि धर्मविशेष का प्रतिपादन करना है। वह पुण्यत्व एवं मनोहरत्व आदि धर्मविशेष का बोध तट आदि शब्दों से नहीं हो सकता। यदि तटशब्द से ही पुण्यत्व-मनोहरत्व आदि धर्मविशेष का बोध को मानना होगा तो अव्याप्ति और अतिव्याप्ति दोषों की संभावना होगी।

अव्याप्ति दोष का लक्षण-'लक्ष्यतावच्छेदकसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्वम्'। यहाँ लक्ष्य तट, लक्ष्यता तट में, तदवच्छेदक तटत्व, उस के समानाधिकरण में रहने वाला पुण्यत्व आदि धर्म का जो अत्यन्त अभाव है उस का प्रतियोगी पुण्यत्व आदि धर्म।अर्थात् यदि पुण्यत्वरूप लक्ष्य से तटपद का प्रयोग किया जाय तब पुण्यत्व से रहित सामान्यतट में तटपद की अव्याप्ति हो जायेगी इस प्रकार लक्ष्य के एकदेश में जो लक्षण नहीं रहता है वह अव्याप्ति नामक दोष है। अतिव्याप्ति दोष का लक्षण-'लक्ष्यतावच्छेदकसमानाधिकरणत्वे सति लक्ष्यतावच्छेदकावच्छिन्न-प्रतियोगिताकभेदसामानाधिकरण्यम्'। यहाँ लक्ष्य तट, लक्ष्यता तट में रहती है, उसका अवच्छेदक तटत्व, उसके (तट के) समानाधिकरण में रहते हुए, लक्ष्यता तट में, उस का अवच्छेदक तटत्व, उस से अवच्छिन्न तट, उसका प्रतियोगितात्मकभेद तटभिन्न पुण्यत्व आदि पदार्थ, उसका समानाधिकरण का भाव अतिव्याप्ति है। अर्थात् तट पद से तट रूपक अर्थ की प्रतीति के साथ साथ यदि तट से भिन्न पुण्यत्व आदि धर्म की भी प्रतीति होगी तब लक्ष्य तट में रहते हुए भी अलक्ष्य पुण्यत्व आदि धर्म में तटरूप लक्षण की अतिव्याप्ति होने लगेगी।

सादृश्यलक्षणा का उदाहरण जैसे कि- हे भ्रमर ! पक्षपात छोड कर सत्य कहो कि भिन्न भिन्न दिशाओं में घूमते हुए तुमने यदि जाति कुसुम

के समान कोई भी फूल पाया हो, देखा हो अथवा सुना हो। इस पद्य में किसी कामुक को भ्रमर पद से संबोधित करती हुई कोई वेश्या किसी नवयौवना के उरोजों (स्तन) के अग्रभाग (चुचुक) को जातिकुसुम पद से लक्षित कराती हुई उसके उरोजों के वैशिष्ट्य के माध्यम से उसके सौन्दर्य की प्रसंशा कर रही है। यहाँ भ्रमर एवं जातिकुसुम पदों के वाच्य अर्थ षट्पद एवं पुष्पविशेष के प्रकरण में न रहने के कारण इन पदों का संबोधन रूप मुख्य अर्थ बाधित होता है, और जिस कारण के बिना संबोधन संगत नहीं हो सकता है वह भ्रमरपदवाच्य नित्य नवीन पुष्पों की कामना के सदृश नित्य नवीन सुन्दरी की कामना के गुण के कारण कामी रूपक अर्थ एवं जाती कुसुम में विद्यमान कठोरत्व एवं वर्तुलत्व आदि गुणों के सदृश नायिका के स्तनों में विद्यमान विशिष्ट कठोरत्व एवं वर्तुलत्व रूप गुणों के सादृश्य के कारण उसके स्तन रूप अर्थान्तर की प्रतीति भ्रमर एवं पुष्प शब्द कराते हैं। इस प्रतीतिविशेष का हेतु सादृश्य संबन्ध है। कामी एवं नायिका के उरोजों के लिए भ्रमर एवं पुष्प पदों के प्रयोग करने का प्रयोजन भ्रमर एवं पुष्प अर्थ में रहनेवाले क्रिया एवं गुणों के सदृश कामुक एवं नायिका के स्तनों की क्रिया एवं गुणों का प्रतिपादन है।

समवाय अर्थात् साहचर्य संबन्ध पर आश्रित लक्षणा का उदाहरण 'छत्रिणो यान्ति' अर्थात् 'छत्रधारी लोग जा रहे हैं'। यहाँ एक छत्रधारी व्यक्ति के लिए बहुवचन के प्रयोग होने से मुख्य अर्थ बाधित हो रहा है। क्योंकि एक छत्रधारी व्यक्ति के लिए बहुवचन का प्रयोग संगत नहीं होता है; इसीलिए गमनरूप क्रिया में छत्रधारी व्यक्ति के साथ जो छत्रशून्य व्यक्ति का साहचर्य संबन्ध है, उसके वश से छत्री पद से छत्रशून्य लोगों का भी बोध लक्षणा के द्वारा होता है। यहाँ छत्री पद द्वारा छत्ररहित व्यक्तिओं का भी बोध कराने का प्रयोजन छत्ररहित व्यक्तिओं में छत्रधारी स्वामी के पूर्णरूप में अनुयायित्वभाव का प्रतिपादन कराना है।

## मातृका

{वैपरीत्या लक्षणा क्रियायोगलक्षणा च}

**वैपरीत्या लक्षणा यथा - 'भद्रमुख' इति। अत्र हि भद्रमुखशब्दस्याभद्रमुखे प्रयोगात् स्वार्थबाधः, अतोऽसौ वाच्यभूतभद्रमुखत्वविपरीतत्वादभद्रमुखत्वं विपरीतनिबन्धनया लक्षणया प्रत्याययति। अत्र च लक्षणाप्रयोजनं गुप्तासत्यार्थप्रतिपत्तिः। गुप्तोऽह्यसत्योऽर्थः तत्तदभिप्रायवशेन प्रायेण प्रयोक्तृभिः प्रतिपाद्यते।**

**क्रियायोगाल्लक्षणायाम् उदाहरणं यथा - 'महति समरे शत्रुघ्नस्त्व'मिति। अत्र हि अशत्रुघ्ने शत्रुघ्नशब्दप्रयोगान्मुख्यशब्दार्थबाधः। शत्रुघ्नशब्दश्चाशत्रुघ्ने शत्रुहननक्रियाकर्तृत्वयोगाल्लक्षणयोक्तः। प्रयोजनं चात्र शत्रुघ्नशब्दाभिधेये नृपतिरूपताप्रतिपादनम्। तथा च -**

**पृथुरसि गुणैः, कीर्त्त्या रामो नलो भरतो भवान्,**<br>**महति समरे शत्रुघ्नस्त्वं, क्षितौ जनकः स्थितेः।**<br>**इति सुचरितैः ख्यातिं बिभ्रच्चिरन्तनभूभृतां**<br>**कथमसि न मांधाता देव त्रिलोकविजय्यपि।। इति।**

**शत्रुघ्नरूपतया नृपतित्वमुपश्लोक्यमानस्य राज्ञो वर्णितम्। तदेवं निबन्धनत्रितयसमुद्भवता लक्षणत्रयस्योक्ता।**

## (सुबोधिनी)

**वैपरीत्या लक्षणे**ति। वैपरीत्यसंबन्धा लक्षणोदाह्रियते भद्रमुखेत्यादौ भद्रं मुखं यस्यासौ भद्रमुख इति। **अत्र ही**ति। अत्र भद्रमुखेत्यादौ, अभद्रमुखे भद्रमुखप्रयोगात् स्वार्थबाध इति स्पष्टम्। **अतोऽसावि**ति। अतः अस्मात् कारणात्, असौ भद्रमुख इति शब्दः, वाच्यभूतभद्रमुखत्वविपरीतत्वात् वाच्यभूतं यद् भद्रमुखत्वं तद्विपरीतत्वात्

तत्प्रतीतत्वात्, अभद्रमुखत्वं विपरीतनिबन्धनया लक्षणया प्रत्याययति अभद्रमुखार्थं विपरीतसंबन्धलक्षणाद्वारा बोधयतीत्यर्थः। **अत्र चेति**। अत्र च प्रसंगेऽस्मिन् भद्रमुखेत्यादौ, लक्षणाप्रयोजनं गुप्तासत्यार्थप्रतिपत्तिः गुप्तो गुह्यो योऽसत्यार्थोऽयथार्थः, तस्य प्रतिपत्तिः ज्ञानमेवात्र प्रयोजनम्। **गुप्तो हीति**। गुप्तो गुह्यो योऽसत्यार्थः, तदभिप्रायवशेन तत्तात्पर्यवशेन, प्रयोक्तृभिः प्रयुञ्जानैः, प्रतिपद्यते ज्ञायते। अयमर्थो प्रयोक्ता असत्यार्थं अभद्रमुखत्वरूपं गोपायितुं विपरीतलक्षणया अभद्रमुखेऽपि भद्रमुख इति शब्दस्य प्रयोगं करोति।

**क्रियायोगलक्षणायामिति**। क्रियायोगलक्षणा महति समरे शत्रुघ्नस्त्वमित्युदाह्रियते। घोरसंग्रामे त्वमेव शत्रुघ्नोऽसीति कश्चित् कमपि दशरथपुत्रशत्रुघ्नेतरं स्तौति। अत्र हीति। अत्र हि महति समरे शत्रुघ्नस्त्वमित्यादौ, अशत्रुघ्ने शत्रुघ्नेतरे, शत्रुघ्नशब्दप्रयोगात् मुख्यशब्दार्थबाधः वाच्यार्थानुपपत्तिः। **शत्रूघ्नशब्द** इति। शत्रुहननक्रियाकर्तृत्वयोगात् रिपुदलनकार्यस्य संपादयितृत्वसंबन्धात्, अशत्रुघ्ने शत्रुघ्नशब्दो लक्षणयोक्तः लक्षणया प्रतिपादितः। **प्रयोजनं चात्रेति**। अत्र च महति समरे शत्रुघ्नस्त्वमित्यादौ, प्रयोजनं लाक्षणिकशब्दप्रयोगस्येति शेषः, शत्रुघ्नशब्दाभिधेये शत्रुघ्नशब्देन योऽभिधीयते तस्मिन् जने, नृपतिरूपताप्रतिपादनम्। अत्रायमाशयो यत् शत्रुघ्न इति शब्दः तन्नाम्नि व्यक्तिविशेषे दशरथात्मज एव रूढमस्ति। परन्तु शत्रुं हन्तीति शत्रुघ्नः इति व्युत्पत्त्या शत्रुहन्तुः कस्यचिज्जनस्य वाचकः स्यात्। वस्तुतो व्यवहारे रूढशब्दं विहाय यौगिकशब्दो नैव प्रयुज्यते। अत एव शत्रुघ्नशब्दः न शत्रुहन्तारमपि तु तन्नामानं व्यक्तिविशेषमभिदध्यात्। परं प्रकृते शत्रुहन्तारमुद्दिश्य तच्छब्दप्रयोगात्, मुख्यार्थानुपपत्तिः। तस्य च जनस्य नृपत्वप्रतिपादनमिह प्रयोजनमिति स्पष्टम्।

**पृथुरसि गुणैरित्यादि**। हे देव! त्वं गुणैः पृथुरसि, कीर्त्या

भवान् रामः नलो भरतः, महति समरे त्वं शत्रुघ्नः, क्षितौ स्थितेः (कारणात्) जनकः, इति सुचरितैः चिरन्तनभूभृतां ख्यातिं बिभ्रत्, त्रिलोकविजय्यपि (त्वं) कथं मान्धाता नासि ? इत्यन्वयः। हे देव! हे प्रभो! त्वं भवान्, गुणैः दयादाक्षिण्यादिभिः, पृथुरसि राजा पृथुः, कीर्त्या यशसा, भवान् त्वं, रामः दशरथात्मजः, नलः नैषधः, भरतः दुष्यन्तात्मजः। महति समरे घोरसंग्रामे, त्वं भवान्, शत्रुघ्नः (दशरथात्मजः, शत्रुं हन्तीति वा), क्षितौ पृथिव्यां, स्थितेः स्थिरतायाः (कारणात्), जनकः मिथिलेशः पिता वा, इति सुचरितैः एतादृशैः शोभनचरित्रैः, चिरन्तनभूभृतां प्राचीनराज्ञां, ख्यातिं बिभ्रत् प्रसिद्धिं धारयन्, त्रिलोकविजय्यपि त्रिलोकस्य जेताऽपि, त्वं कथं मान्धाता तन्नामा नृपो (मां दधातीति मान्धता मम पोषणकर्ता वा) नासि न भवसि ? इति। **शत्रुघ्नरूपतये**ति। शत्रुघ्नरूपतया दशरथात्मजत्वेन, उपश्लोक्यमानस्य स्तुत्यमानस्य, राज्ञः नृपस्य, नृपतित्वं राजत्वं चिरन्तनख्यातियुक्तनृपतित्वं, वर्णितं चित्रितम्। **तदेवमि**ति। तत् तस्मात्, एवं पूर्वोक्तप्रकारेण, लक्षणात्रयस्य त्रिविधलक्षणायाः, निबन्धनत्रितयसमुद्भवता निबन्धानां कारणानां यत् त्रितयं तस्मात् समुद्भवता उत्पत्तिः, उक्ता कथिता। अयमर्थः लक्षणायाः त्रीणि निबन्धनानि कारणानि, मुख्यार्थबाधः, मुख्यार्थलक्ष्यार्थयोस्संबन्धः, रूढिप्रयोजनयोरन्यतरस्य च सद्भावः। तेभ्यश्च लक्षणाकारणेभ्यः, ये लक्षणाभेदाः संभवन्ति, तथा लक्षणायां वाच्यलक्ष्ययोर्यः संबन्धोऽसौ प्रतिपादितः।

## (सुगमनी)

अब वैपरीत्यलक्षणा और क्रियायोगलक्षणा को उदाहरण के साथ दिखाते हैं- **वैपरीत्या लक्षणा यथा** इत्यादि द्वारा। वैपरीत्यसंबन्धमूला लक्षणा 'भद्रमुख'। यहाँ किसी अभद्र व्यक्ति के लिए भद्रमुख शब्द के

प्रयोग से स्वार्थ की बाधा हो रही है, अतः भद्रमुख रूप वाच्यार्थ के विपरीत अभद्रमुत्व रूपक अर्थ विपरीतनिबन्धनात्मक लक्षणा से प्रतीत होता है। यहाँ लक्षणा का प्रयोजन गुप्त असत्यार्थ (अभद्रत्व) की प्रतीति कराना है। क्यों कि गुप्त असत्यार्थ को उन उन विशिष्ट अभिप्राय से प्रयोगकर्ता लाक्षणिक शब्दों से व्यक्त करते हैं।

क्रियायोगलक्षणा का उदाहरण- **'महति समरे शत्रुघ्नस्त्वम्'** यह अर्थात् विशाल युद्ध में आप शत्रुघ्न हैं। यहाँ उस व्यक्ति के लिए शत्रुघ्न शब्द का प्रयोग हुआ है जो शत्रुघ्न नहीं है, इसीलिए शब्द का मुख्य अर्थ बाधित हुआ है। वह शत्रुघ्न पद शत्रुओं का विनाश करने वाले व्यक्ति का वाचक है, किन्तु यहाँ शत्रुघ्ननामरहित व्यक्ति के लिए प्रयुक्त शत्रुघ्नपद के प्रयोग का हेतु उस व्यक्ति का शत्रुहनन क्रिया से संबन्ध होना है। इस प्रकार शत्रुघ्न पद शत्रुहनन क्रिया के साथ संबन्ध के कारण शत्रुघ्न नाम से भिन्न व्यक्ति का क्रियायोग लक्षणा के द्वारा बोध कराता है। यहाँ लाक्षणिक प्रयोग का प्रयोजन है- शत्रुघ्ननामरहित व्यक्ति के लिए शत्रुघ्न शब्द का प्रयोग करने पर शत्रुघ्न शब्द के अर्थ व्यक्ति में नृपतिरूपता का प्रतिपादन है। और भी-

**(पृथुरसि इत्यादि पद्य)** तुम अपने गुणों से पृथु हो, कीर्ति के कारण राम, नल और भरत हो। महान् युद्ध में तुम शत्रुघ्न हो, पृथ्वी पर स्थिति के कारण जनक हो। इस प्रकार अपने सुचरितों के कारण प्राचीन राजाओं की ख्याति को प्राप्त करते हुए भी, त्रिलोकविजयी हो कर भी तुम मान्धाता क्यों नहीं हो ?

इस पद्य में शत्रुघ्न के रूप में जिस राजा की स्तुति की गयी है उस राजा का नृपतित्व का वर्णन किया गया है। इस प्रकार मुख्यार्थ का बाध, लक्षक पद के लक्षक अर्थ (वाच्यार्थ और मुख्यार्थ के बीच में संबन्ध, तथा रूढि और प्रयोजन में से अन्यतम के द्वारा लक्षणा के प्रयोग की चर्चा करते हुए हेतु के आधार पर लक्षणा के त्रिविधत्व का वर्णन किया गया है।

## मातृका

{लक्षणाभेदेषु वाच्यस्यात्यन्ततिरस्कृतत्वाविवक्षितत्वविवक्षितत्वानि}

इदानीं पञ्चविधसंबन्धनिबन्धनायामसौ पूर्वोपवर्णितायां क्वचिद्वाच्यस्यातितिरस्कारः, क्वचिद्विवक्षितत्वं क्वचिच्चाविवक्षितत्वमित्येवंविधं त्रयं यत् सहृदयैरुपदर्शितं तस्य विषयविभागमुपदर्शयितुमाह

सादृश्ये वैपरीत्ये च वाच्यस्यातितिरस्क्रिया।।१०।।
विवक्षा चाविवक्षा च संबन्धसमवाययोः।
उपादाने विवक्षात्र लक्षणे त्वविवक्षणम्।।११।।
तिरस्क्रिया क्रियायोगे क्वचित्तद्विपरीतता।

अभिधेयेन संबन्धादित्यत्र यद् आसत्तिरूपं पञ्चकमुक्तं तत्र सादृश्ये वैपरीत्ये च वाच्यस्यात्यन्तं तिरस्कारः। तथा हि -

सादृश्यनिबन्धनायां लक्षणायामुपमानवाचिनः पदस्योपमेयपरत्वमुपमानात्मकं वाच्यमत्यन्तं तिरस्क्रियते। यथोपदर्शितं 'स्निग्धश्यामलकान्तिलिप्ते'ति 'पयोदसुहृदा'मिति च। अत्र हि लिप्तसुहृच्छब्दयोः स्वार्थोपमितवस्तुपरत्वात् स्वार्थस्यात्यन्तं कार्येऽनन्वितत्वम्। वैपरीत्यसमाश्रयायामपि तस्यामर्थान्तरस्य वाच्यविपरीतस्योपादेयत्वाद् वाच्यस्यात्यन्तं तिरस्कारः, यथा 'भद्रमुखे'ति। अत्र हि भद्रमुखत्वमभद्रमुखत्वादत्यन्तं तिरस्कृतम्।

एवं सादृश्यवैपरीत्ययोरत्यन्ततिरस्कृतवाच्यता।

## (सुबोधिनी)

**इदानीमिति।** इदानीमधुना, पञ्चविधसंबन्धनिबन्धनायां पञ्चविधा ये वाच्यलक्ष्ययोः संबन्धास्ते निबन्धनानि कारणानि यस्याः लक्षणायास्तस्याम्, आसत्तौ संबन्धे, पूर्वोपवर्णितायां पूर्वकथितायां

लक्षणायामिति शेषः, क्वचित् कुत्रचिद्भेदे, वाच्यस्याततिरस्कारः वाच्यार्थस्य सर्वथा परित्यागः, क्वचिद्विवक्षितत्वं क्वचिच्चाविवक्षितत्वम्, इत्येवंविधं त्रयं इत्येवंप्रकारकं त्रिविधं, यत् सहृदयैरुपदर्शितं तज्ज्ञैरुदाहरणमुखेन कथितं, सहृदयपदेनात्र (ध्वन्यालोककारस्याऽऽनन्दवर्धनाऽऽचार्यस्याक्षेप इति केचित्), तस्य भेदत्रयस्य, विषयविभागमुपदर्शयितुमाह स्वरूपभेदं कथयितुमवोचत् ग्रन्थकार इति शेषः।

**सादृश्ये** इति। सादृश्ये वैपरीत्ये च वाच्यस्याततिरस्क्रिया। संबन्धसमवाययोर्विवक्षा च अविवक्षा च। अत्र उपादाने विवक्षा, लक्षणेऽविवक्षणम्। क्रियायोगे क्वचित् तिरस्क्रिया, (क्वचित्) तद्विपरीतता। इत्यन्वयः। वाच्यलक्ष्ययोः सादृश्ये सादृश्यसंबन्धे, वैपरीत्ये च वैपरीत्यसंबन्धे च, वाच्यस्य मुख्यार्थस्य, अतितिरस्क्रिया सर्वथा परित्यागः। तत्र संबन्धे समवाये च विवक्षाऽविवक्षा च विवक्षाविवक्षोभयम्, उपादाने उपादानलक्षणायां विवक्षा, लक्षणे लक्षणलक्षणायाम् अविवक्षणम् अविवक्षा। क्रियायोगे क्रियायोगसंबन्धे, क्वचित् कुत्रचित्, तिरस्क्रिया परित्यागः, (क्वचिच्च) तद्विपरीतता वाच्यार्थतिरस्क्रियावैपरीत्यम् अर्थाद् विवक्षितत्वम्।

तदेव वृत्तौ व्याख्याति **अभिधेयेने**ति। 'अभिधेयेन संबन्धात्' इत्यत्र आचार्यभर्तृमित्रोक्ते अभिधेयेन संबन्धादिति पूर्वोक्ते उद्धरणे, यदासत्तिरूपं पञ्चकमुक्तं यत्सम्बन्धपञ्चकं प्रतिपादितं, तत्र तेषु पञ्चसु संबन्धेषु, सादृश्ये सादृश्यसंबन्धे, वैपरीत्ये च वैपरीत्यसंबन्धे च, वाच्यस्य मुख्यार्थस्य, अत्यन्तं तिरस्कारः सर्वथा परित्यागः। **तथाही**ति। तयोरुदाहरणे प्रदीयेते - सादृश्यनिबन्धनायां लक्षणायां सादृश्यसंबन्धात्मिकायां तस्यां, उपमानवाचिनः पदस्योपमेयपरत्वम् उपमानम् उपमेयत्वेन परिणमत इति, उपमानात्मकं वाच्यम् अत्यन्तं तिरस्क्रियते उपमानार्थः सर्वथा परित्यज्यते। **यथोपदर्शित**मिति।

यथोपदर्शितं उदाहरणमुखेनेति शेषः, 'स्निग्ध श्यामलकान्तिलिप्ते'ति 'पयोदसुहृदा'मिति च पूर्वं तयोरुदाहरणत्वेन। **अत्र हीति**। अत्र हि 'स्निग्धश्यामलकान्तिलिप्ते'त्यत्र 'पयोदसुहृदा'मित्यत्र च, लिप्तसुहृच्छब्दयोः लिप्तशब्दस्य सुहृच्छब्दस्य च, स्वार्थस्योपमितं उपमेयत्वेन विवक्षितपदार्थः, तत्परत्वात्, स्वार्थस्य वाच्यार्थस्य लेपनात्मकस्य मित्रात्मकस्य च, कार्ये तत्तद्वाच्यार्थे, अत्यन्तमनन्वितत्वम् सर्वथाऽसंबद्धत्वमिति। **वैपरीत्यसमाश्रयायामपी**ति। वैपरीत्यसमाश्रयायामपि तस्यां विपरीतलक्षणायामपि, वाच्यविपरीतस्य अर्थान्तरस्य वाच्याद् विपरीतस्य भिन्नस्यार्थस्य, उपादेयत्वात् उपयोगित्वाद्, वाच्यस्यात्यन्तं तिरस्कारः वाच्यार्थस्य सर्वथा परित्यागः, यथा भद्रमुखेति पूर्वमेव व्याख्यातम्। **अत्र हीति**। अत्र हि भद्रमुख इत्यत्र, अभद्रमुखे भद्रमुखत्वस्य प्रयोगात्, भद्रमुखत्वरूपवाच्यम् अत्यन्तं तिरस्कृतं सर्वथा परित्यक्तम्। **एवमिति**। एवं अनेन प्रकारेण, सादृश्यवैपरीत्ययोरत्यन्ततिरस्कृतवाच्यता सादृश्यसंबन्धे वैपरीत्यसंबन्धे च वाच्यार्थस्य सर्वथा परित्यागः।

## (सङ्गमनी)

पाँच प्रकार के संबन्धनिबन्धना लक्षणा में वाच्य अर्थ कहाँ अत्यन्त तिरस्कृत, कहाँ अविवक्षित और कहाँ विवक्षित होता है वह बताने हेतु कहते हैं- **इदानीं पञ्चविधसंबन्धनिबन्धनायाम्** इत्यादि। पहले कहे गये पाँच प्रकार की संबन्धनिबन्धना लक्षणा के भेदों में वाच्य अर्थ कहीं पर अत्यन्त तिरस्कृत, कहीं पर अविवक्षित और कहीं पर विवक्षित; इस प्रकार जो तीन स्थल सहृदयों ने बताया है उस का क्षेत्र निरूपण करने के लिए कहते हैं-

(कारिका) सादृश्यसंबन्धमूला लक्षणा में एवं वैपरीत्यसंबन्धमूला लक्षणा में वाच्य अर्थ का अत्यन्त तिरस्कार होता है। संबन्धमूला लक्षणा में एवं समवायमूला लक्षणा में वाच्य की विवक्षा और अविवक्षा रहती है। उपादनलक्षणा में वाच्य अर्थ की विवक्षा एवं लक्षणलक्षणा में अविवक्षा रहती

है। क्रियायोगलक्षणा में कहीं पर वाच्य अर्थ का तिरस्कार और कहीं पर वाच्यार्थ की तिरस्क्रिया का वैपरीत्य होता है अर्थात् वच्यार्थ विवक्षित होता है।

कारिका की व्याख्या ग्रन्थकार स्वयं वृत्ति में करते हुए कहते हैं- **अभिधेयेन संबन्धात्** इत्यादि। अभिधेयेन संबन्धात् इस पूर्वोक्त आचार्यभर्तृमित्रोक्त कारिका में जो पाँच प्रकार के आसन्नत्व (मुख्यार्थ और वाच्यार्थ के बीच संबन्ध) बताये गये है; उन में से सादृश्य और वैपरीत्य में वाच्य का अत्यन्त तिरस्कार होता है। जैसे कि-

सादृश्यनिबन्धना लक्षणा में उपमानवाचक पद उपमेयपर होता है और उपमानरूप जो वाच्य अर्थ है वह अत्यन्त तिरस्कृत होता है। जैसे पहले उदाहरण के रूप में प्रस्तुत 'स्निग्धश्यामलकान्तिलिप्त' इस अंश में 'पयोदसुहृदाम्' इस अंश में बताया गया है। यहाँ लिप्त एवं सुहृत् शब्दों का स्वार्थ अर्थात् मुख्य अर्थ उपमित वस्तुपरक है, इसीलिए वाच्यार्थ अपने कार्य से अन्वित नहीं है (वाच्यार्थ का अन्वय उपपन्न नहीं है अर्थात् बाधित है)। वैपरीत्यसंबन्ध लक्षणा में भी जो लक्ष्यार्थ प्रतीत होता है वह वाच्य के विपरीत होने से वाच्य का अत्यन्त तिरस्कार होता है; जैसे 'भद्रमुख' इस पद में। कसी अभद्र व्यक्ति में भद्रमुख पद के प्रयोग से वाच्यार्थ अत्यन्त तिरस्कृत होता है।

इस प्रकार सादृश्यमूला लक्षणा में और वैपरीत्यसंबन्धमूला लक्षणा में वाच्य का अत्यन्त तिरस्कार होता है।

## मातृका

**संबन्धसमवाययोस्तु वाच्यस्य विवक्षितत्वाविवक्षितत्वेन [१३]तस्य नात्यन्तं तिरस्कारः। तत्र (सम्बन्धे) हि**

१३. **तस्यात्यन्तं तिरस्कारः** इति निर्णयसागरप्रकाशिते मूलपाठे लभ्यते। डॉ. ब्रह्ममित्रावस्थिद्वाराऽत्रैवं संशोधनं कृतमस्ति यत् संबन्धसमवाययोस्तु वाच्यस्य विवक्षितत्वाविवक्षितत्वेन **(द्वैविध्यम्। तथा हि क्वचिद्वाच्यस्य विवक्षितत्वे न तस्य तिरस्कारः, अविवक्षितत्वे तु)** तस्यात्यन्तं तिरस्कारः। अथवा तस्य **नात्यन्तं तिरस्कारः** इत्यपि पाठान्तरो दर्शितः। द्रष्टव्यम् अभिधावृत्तिमातृका,पृ.५२,डॉ. ब्रह्ममित्रावस्थिद्वारा प्रकाशिता, इन्दुप्रकाशन, दिल्ली, १९७७

उपदानात्मिकायां लक्षणायामुपादाने वाच्यविवक्षायां वाच्यस्य विवक्षितत्वम्। तथा हि - तत्र विवक्षितान्यपरता सहृदयैः काव्यवर्त्मनि निरूपिता, [१४]वाच्यस्यार्थान्तरसंक्रमितत्वात्। तथा हि यत्रार्थान्तरसंक्रमितवाच्यता तत्र संबन्धनिबन्धनायां लक्षणायामुपादाने वाच्यविवक्षायामुदाहरणं - 'पीनो देवदत्तो दिवा न भुंक्ते' इति। अत्र हि दिनाधिकरणभोजनाभावविशिष्टतया पीनत्वलक्षणं कार्यं विवक्षितमेव सत् स्वसिद्ध्यर्थत्वेन संबन्धनिबन्धनायां लक्षणायां रात्रिभोजनात्मकं कारणमाक्षिपति।

समवायनिबन्धनायां तस्याम् - उपादाने वाच्यस्य विवक्षितत्वं, यथा 'छत्रिणो यान्ती'ति। अत्र हि यदा छत्री बहुत्वोपेतत्वात् स्वगतबहुत्वान्वयसंसिद्ध्यर्थत्वेन छत्रशून्यानपि आक्षिपति तदा समवायनिबन्धने छत्रशून्यानामुपादाने क्रियमाणे वाच्यश्छत्री विवक्षितः। तदेवं संबन्धसमवायनिबन्धनयो-रुपादानात्मिकयोर्लक्षणयोर्वाच्यस्य विवक्षितत्वमुक्तम्।

## (सुबोधिनी)

**संबन्धसमवाययो**स्त्विति। संबन्धसमवाययोस्तु संबन्धलक्षणायां समवायलक्षणायां च, वाच्यस्य विवक्षितत्वाविवक्षितत्वेन तस्य नात्यन्तं तिरस्कारः तयोः वाच्यं विवक्षितमपि अविवक्षितमपीति न तिरस्कारः। **तत्रे**ति। तत्र हि संबन्धे, उपादानात्मिकायां लक्षणायामुपादाने वाच्यविवक्षायां वाच्यस्य विवक्षितत्वम् उपादानलक्षणायां

---

१४. काव्यवर्त्मनि निरूपिता लक्षणे तु वाच्यस्य विवक्षितार्थान्तरसंक्रमितत्वात् इति निर्णयसागरप्रकाशिते मूलपाठे लभ्यते इति रेवाप्रसादद्विवेदिनोक्त्वा तत्र **काव्यवर्त्मनि निरूपिता,वाच्यस्यार्थान्तरसंक्रमितत्वात्** इति परिवर्तितम्। ब्रह्ममित्रावस्थिद्वारा प्रकाशितायां तु **लक्षणे तु वाच्यस्याविवक्षितत्वं तस्यार्थान्तरसंक्रमितत्वात्**इति पाठो लभ्यते। द्रष्टव्यम् अभिधावृत्तिमातृका,पृ.५२,डॉ.ब्रह्ममित्रावस्थिद्वारा प्रकाशिता, इन्दुप्रकाशन, दिल्ली, १९७७

वाच्यस्य विवक्षा तिष्ठतीति तस्य विवक्षितत्वम्। **तथा हीति**। तत्रोपादानलक्षणायां, सहृदयैः काव्यज्ञैः, काव्यवर्त्मनि काव्यमार्गे. विवक्षितान्यपरता विवक्षितता अन्यपरता चेति, निरूपिता निर्णिता, वाच्यस्यार्थान्तरसंक्रमितत्वात् वाच्यार्थस्य स्वाभिन्नेऽर्थान्तरे संक्रमितत्वात्। **तथा हीति**। यत्र लक्षणायाम्, अर्थान्तरसंक्रमितवाच्यता वाच्यार्थस्यार्थान्तरे संक्रमणं, तत्र तस्यां लक्षणायां, संबन्धनिबन्धनायां संबन्धो निबन्धनं तस्यां सा तस्याम्, उपादाने उपादानलक्षणायां, वाच्यविवक्षायां यदा वाच्यस्य विवक्षा भवति तदा, उदाहरणं 'पीनो देवदत्तो दिवा न भुंक्ते' इति पूर्वमेव व्याख्यातम्। **अत्र हीति**। अत्र 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यादौ, पीनत्वलक्षणं कार्यं पीनत्वं स्थूलत्वं लक्षणं यस्य तत्, दिनाधिकरणभोजनाभावविशिष्टतया दिनस्य दिवसस्य अधिकरणे यो भोजनाभावः तद्विशिष्टतया तेन दिवाभोजनाभावरूपविशेषणेन विशिष्टत्वमिति, विवक्षितमेव सत् अपरित्यक्तमेव सत्, स्वसिद्ध्यर्थत्वेन आत्मनः पीनत्वार्थस्य साधनार्थं, संबन्धनिबन्धनायां लक्षणायां, दिनाधिकरणभोजनाभावविशिष्ट-पीनत्वरूपकार्यस्य रात्रिभोजनात्मकं कारणं रात्रिभोजनरूपं कारणम्, आक्षिपति लक्षणया बोधयतीत्यर्थः।

**समवायनिबन्धनायामिति**। समवायनिबन्धनायां तस्यां लक्षणायां, उपादाने उपादानलक्षणायां, वाच्यस्य वाच्यार्थस्य, विवक्षितत्वं अपरित्यक्तत्वं, यथा 'छत्रिणो यान्ती'ति पूर्वमेव व्याख्यातम्। **अत्र हीति**। अत्र हि 'छत्रिणो यान्ती'त्यत्र, यदा छत्री एकत्वावच्छिन्नश्छत्रधारी कश्चित्, बहुत्वोपेतत्वात् बहुत्वयुक्तत्वात्, स्वगतबहुत्वान्वयसंसिद्ध्यर्थत्वेन आत्मनो बहुत्वावच्छिन्नान्वयसिद्ध्यर्थं, छत्रशून्यानपि छत्ररहितानपि आक्षिपति लक्षणया प्रत्याययति, तदा समवायनिबन्धने समवायनिबन्धनायां लक्षणायां, छत्रशून्यानां छत्ररहितानाम्, उपादाने क्रियमाणे ग्रहणे क्रियमाणे, वाच्यश्छत्री वाच्यभूत

एकत्वावच्छिन्नश्छत्री, विवक्षितः अपरित्यक्तो भवतीत्यर्थः। **तदेवमिति**। तत् तस्मात्, एवमुक्तरीत्या, संबन्धसमवायनिबन्धनयो-**रुपादानात्मिकयोर्लक्षणयोः** उपादानलक्षणायाः संबन्धे समवाये च, वाच्यस्य वाच्यार्थस्य, **विवक्षितत्वमुक्तम्** अपरित्यक्तत्वमुक्तम्।

**(सङ्क्रमनी)**

संबन्धमूला एवं समवायमूला लक्षणा में वाच्य अर्थ विवक्षित भी और अविवक्षित भी होता है यह बताने हेतु कहते हैं- **संबन्धसमवाययोस्तु** इत्यादि। संबन्धमूला एवं समवायमूला लक्षणा में वाच्य अर्थ के विवक्षित भी और अविवक्षित भी होने से उसका (वाच्य अर्थ का) अत्यन्त तिरस्कार नहीं होता है। उन में से संबन्धमूला लक्षणा में उपादानात्मिका लक्षणा में जब वाच्य विवक्षित रहता है तब वाच्य को विवक्षित माना जाएगा। क्यों कि वहाँ (उपादानलक्षणा में) वाच्यार्थ लक्ष्यार्थ में संक्रमित होने से वाच्यार्थ की विवक्षितता तथा अन्यपरता (लक्ष्यपरता) सहृदयों ने काव्यमार्ग में बताई है। जैसे कि जहाँ संबन्धमूला उपादानात्मिका लक्षणा में जब वाच्य विवक्षित रहता है तब उसका उदाहरण 'पीनो देवदत्तो दिवा न भुंक्ते' यह है। इस उदाहरण में दिन में होने वाले भोजन के अभाव से विशिष्ट पीनत्व (मोटापा) रूपक कार्य विवक्षित होते हुए स्वार्थ (पीनत्व) की सिद्धि के लिए संबन्धनिबन्धना लक्षणा में रात्रिभोजन रूपक कारण का आक्षेप होता है।

समवायमूला उपादानात्मिका लक्षणा में वाच्य विवक्षित रहता है, जिसका उदाहरण है- 'छत्रिणो यान्ति' यह। यहाँ जब छत्रधारी यह एकवचनान्त पद बहुत लोगों के लिए प्रयुक्त है, जब अपने लिए प्रयुक्त बहु वचन की सिद्धि के लिए समवायसंबन्ध से छत्ररहित लोगों के आक्षेप का हेतु होता है तब समवायसंबन्ध से छत्ररहित पुरुषों का आक्षेप होने पर एक छत्रधारी यह वाच्यार्थ विवक्षित है। इस प्रकार संबन्ध और समवाय के कारण उपादानलक्षणा में वाच्यार्थ का विवक्षितत्व कहा गया है।

(मातृका)

लक्षणात्मिकयोस्तु तयोर्वाच्यस्याविवक्षितत्वम्, न त्वत्यन्तं तिरस्कारः लक्ष्यमाणद्वारेण कथंचित् कार्येऽन्वितत्वात्। तत्र संबन्धनिबन्धनायां लक्षणायामविवक्षितवाच्यत्व उदाहरणं 'रामोऽस्मी'ति। अत्र हि रामशब्दवाच्यं दाशरथिरूपं व्यंग्यधर्मान्तरपरिणतत्वात् स्वपरत्वेनानुपात्तम्, तस्मादविवक्षितम्, न त्वत्यन्तं तिरस्कृतम्, व्यंग्यधर्मद्वारेण वाक्यार्थे कथंचिदन्वितत्वात्। एवं 'गंगायां घोष' इत्यादावप्युन्नेयम्।

समवायनिबन्धनायां तु लक्षणायामविवक्षितवाच्यता 'छत्रिणो यान्ती'त्यत्रैवोदाहार्या। तथा हि यदा छत्रित्वं बहुत्वान्वयान्यथानुपपत्त्या समुदायपरतयोपादीयते तदात्र समुदायस्य विवक्षितत्वाद् वाच्यस्याविवक्षा। एवमपि च समुदायान्तर्भूतत्वात् समुदायद्वारेण छत्रिणोऽपि क्रियान्वयः सुलभ एव। अत एव चात्र वाच्यस्य नात्यन्तं तिरस्कारः, समुदायरूपान्तर्भूतत्वेन क्रियान्वितत्वात्।

तदेवं संबन्धसमवायनिबन्धनयोर्लक्षणयोर्वाच्यस्य विवक्षितत्वमविवक्षितत्वं च, न त्वत्यन्ततिरस्कार इति स्थितम्।

(सुबोधिनी)

**लक्षणात्मिकयोस्तु** इति। लक्षणात्मिकयोस्तु तयोः लक्षणलक्षणाया भेदयोः, वाच्यस्याविवक्षितत्वं वाच्यार्थस्यापरित्यक्तत्वं, न त्वत्यन्तं तिरस्कारः सर्वथा परित्यागो नास्तीत्यर्थः, लक्ष्यमाणद्वारेण लक्ष्यार्थमाध्यमेन, कथंचित् केनापि प्रकारेण, अन्वितत्वात् संबद्धत्वात्। **तत्रेति**। तत्र संबन्धनिबन्धनायां लक्षणायामविवक्षितवाच्यत्व उदाहरणं 'रामोऽस्मी'ति यत्र वाच्यस्य विवक्षा न भवति तत्र लक्षणलक्षणा तथा

लक्षणलक्षणायाः संबन्धनिबन्धनायामुदाहरणं 'रामोऽस्मी'ति। **अत्र हीति**। अत्र हि 'रामोऽस्मी'त्यत्र, रामशब्दवाच्यं रामशब्दाभिधेयं, दाशरथिरूपं दशरथात्मजात्मकं, व्यंग्यधर्मान्तरपरिणतत्वात् व्यंग्यधर्मान्तरे अत्यन्ताकष्टसहिष्णुत्वादिरूपो यो व्यंग्यस्तद्धर्मान्तरस्तस्मिन् परिणमत इति कृत्वा, स्वपरत्वेनोपात्तं स्वेन सह यः परः तस्य भावस्तत्त्वेनोपात्तं गृहीतं, तस्मादविवक्षितं अत एवापरित्यक्तं, न त्वत्यन्तं तिरस्कृतं सर्वथा परित्यागो नास्तीत्यर्थः, व्यंग्यधर्मद्वारेण कथंचिदन्वितत्वात् व्यंग्यधर्ममाध्यमेन वाच्यस्यार्थस्य संबन्धादिति। अयमर्थः 'रामोऽस्मी'त्यत्र दशरथात्मजरूपो यो वाच्यार्थः स एव स्वाभीष्टधर्मयुक्तत्वेन अत्यन्तकष्टसहिष्णुत्वधर्मयुक्तत्वरूपधर्मेणान्वितः सन् लक्ष्यार्थरूपेण परिणमत इति कृत्वा वाच्यार्थोऽत्राविवक्षितः सन्नपि न सर्वथा परित्यक्तो भवति। **एवमिति**। एवं 'गङ्गायां घोष' इत्यादावप्युन्नेयं पूर्ववत् 'गङ्गायां घोष' इत्यत्रापि गङ्गाशब्दः स्वार्थं गङ्गाप्रवाहरूपमपरित्यजन् स्वविशिष्टा ये धर्माः पुण्यत्वादयः तद्युक्तत्वेन प्रतीयत इत्यत्रापि स्वपरत्वेन विवक्षितत्वात् नात्यन्तं तिरस्कारोऽपि तु अविवक्षितत्वमात्रं वाच्यस्येति मुकुलभट्टस्याशयः।

**समवायसम्बन्धनिबन्धनायामिति**। समवायनिबन्धनायां लक्षणायां 'छत्रिणो यान्ती'त्यत्रैवोदाहार्येति स्पष्टम्। **तथा हीति**। यदा छत्रित्वं बहुत्वान्वयान्यथानुपपत्त्या बहुत्वरूपो योऽन्वयः, तस्योपपत्तिर्नैव जायते यद्विना तया, समुदायपरतया समूहात्मकतया, उपादीयते प्रयुज्यते, तदाऽत्र 'छत्रिणो यान्ती'त्यत्र, समुदायस्य विवक्षितत्वाद् समूहस्य प्रतिपादयिष्यमाणत्वात्, वाच्यस्याविवक्षा एकत्वावच्छिन्नछत्रधारित्वरूपवाच्यार्थस्याविवक्षा। **एवमपि चेति**। एवमपि तथैव, (एकस्य छत्रिणः) समुदायान्तर्भूतत्वात् समूहाश्रितत्वात्, सामुदायद्वारेण समूहमाध्यमेन, छत्रिणोऽपि एकस्य छत्रिणोऽपि,

क्रियान्वयः गमनक्रियया सह संबन्धः, सुलभ एव सुगम एव। **अत एवेति**। अत एव तस्मादेव, चात्र 'छत्रिणो यान्ती'त्यत्र, वाच्यस्य एकत्वावच्छिन्नछत्रधारित्वरूपवाच्यार्थस्य, नात्यन्तं तिरस्कारः सर्वथा परित्यागो नास्ति, समुदायरूपान्तर्भूतत्वेन समूहात्मकेऽन्तर्भूतरूपेण, क्रियान्वितत्वात् गमनक्रियया सह संबद्धत्वात्।

**तदेवमिति**। तदेवं तस्मादेवं प्रकारेण, सम्बन्ध-समवायनिबन्धनयोर्लक्षणयोः 'पीनो देवदत्तो दिवा न भुंक्ते' इत्यादौ 'छत्रिणो यान्ती'त्यादौ च **उपादानलक्षणायां विवक्षितत्त्वं** तथा तयोरेव सम्बन्धसमवायनिबन्धनयोर्लक्षणयोः **लक्षणलक्षणायामविवक्षितत्त्वं**, न त्वत्यन्ततिरस्कारो न तु सर्वथा परित्याग इति स्थितं निश्चितम्।

## (सङ्गमनी)

संबन्धमूला एवं समवायमूला लक्षणलक्षणा में वाच्यार्थ का अविवक्षितत्व को बताने हेतु कहते हैं- **लक्षणात्मिकयोस्तु** इत्यादि। सम्बन्धहेतुक और समवायहेतुक लक्षणलक्षणा में तो वाच्यार्थ की अविवक्षा रहा करती है, न कि उसका अत्यन्त तिरस्कार होता है। क्योंकि वहाँ वाच्यार्थ लक्ष्यमाण अर्थ के द्वारा कार्य में किसी भी प्रकार से अन्वित होता है। संबन्धमूला लक्षणलक्षणा में अविवक्षितवाच्य का उदाहरण 'रामोऽस्मि' यह। क्योंकि यहाँ राम पद का वाच्य दाशरथि (दशरथ का पुत्र) रूप अर्थ, धर्मान्तर (अत्यन्त कष्टसहिष्णुत्व रूप धर्म) में परिणत हो जाता है। इसीलिए वह मुख्यार्थ के रूप में गृहीत नहीं होता, अतः उसमें वाच्यार्थ अविवक्षित रहते हुए भी अत्यन्त तिरस्कृत नहीं होता है, क्योंकि व्यंग्य धर्म के रूप में वह (राम रूप वाच्यार्थ) वाक्यार्थ में कथंचित् अन्वित रहता ही है। इस प्रकार 'गंगायां घोषः' इत्यादि उदाहरणों में भी है। अर्थात् 'गंगायां घोषः' इस उदाहरण में भी गङ्गाप्रवाह में घोष का आधार न हो पाने से मुख्यार्थ बाधित हो कर यद्यपि तटरूप अर्थान्तर में अन्वित होता ही है, इसीलिए वहाँ भी वाच्य का अत्यन्त तिरस्कार नहीं होता है।

समवायनिबन्धना लक्षणलक्षणा में अविवक्षितवाच्य का उदाहरण

'छत्रिणो यान्ति' यह है। क्योंकि वहाँ एक छत्रधारी के लिए बहुवचन के प्रयोग की उपपत्ति के लिए छत्रित्व को समुदाय अर्थ के लक्षक के रूप में मान लिया जाता है। तब समुदाय की विवक्षा होने से एकछत्रधारी यह वाच्य अविवक्षित हो जाता है। और इस प्रकार एक छत्रधारी व्यक्ति यह अर्थ भी समुदाय में समाहित है; अतः समुदाय के द्वारा गमनक्रिया से उसका अन्वय बना ही रहता है; इसीलिए समुदाय में समाहित होने से और गमनक्रिया से उस एकछत्रधारी व्यक्ति का भी संबन्ध रहने से वाच्यार्थ (एक छत्रधारी) का अत्यन्त तिरस्कार नहीं हुआ है।

संबन्धमूला एवं समवायमूला लक्षणलक्षणा में वाच्यार्थ का अविवक्षितत्व है, न कि अत्यन्ततिरस्कृतत्व यह निष्कर्ष है।

(मातृका)

क्रियायोगनिबन्धनायां तु लक्षणायां शब्दगतावयवशक्त्यनुसरणे शब्दशक्तिमूलता लक्ष्यमाणस्यार्थस्य। तत्र च वाच्यस्यार्थस्य तिरस्क्रिया यथा 'पुरुषः पुरुष' इति। अत्र ह्येकेन पुरुषशब्देन विशिष्टजातीयस्यार्थस्योपात्तत्वादपरः पुरुषशब्दः स्ववाच्यव्यतिरेकेणैव क्रियायोगनिबन्धनया लक्षणया पुनरतिशयितृत्वमुपादत्ते।

यत्र तु निमित्तसद्भावाद् वाच्येऽर्थे विवक्षित एव तस्यार्थान्तरस्य शब्दशक्त्यन्तरमूलतया व्यवस्थितस्याव्यवायः क्रियते तत्र तद्विपरीततया वाच्यार्थतिरस्क्रियावैपरीत्यम्। न खल्वत्र वाच्यस्यार्थस्य तिरस्क्रिया, अपि तु विवक्षितत्वमेव, यथा 'महति समरे शत्रुघ्नस्त्वमि'ति। अत्र हि शत्रुघ्नशब्दः शत्रुहननक्रियायाः कर्तृत्वं क्रियायोगनिबन्धनया लक्षणयावगमयन्नपि स्वार्थं दाशरथिमुपमानतयापि प्रतिपादयति।

तेन तस्य विवक्षितस्य स्वार्थताऽपि। यद्यपि चोपमेयपरत्वेनोपमानस्योपादानादेवंविधे विषयेऽत्यन्ततिरस्कृत-वाच्यता सहृदयैरङ्गीक्रियते तथापि क्रियायोगनिबन्धनलक्षणावसरे तावद् वाच्यस्योपमानत्वेनाङ्गीकृतत्वादतिरस्कृतवाच्यताऽपि भवति।

तदेवं क्रियायोगनिबन्धनायामन्तःसंक्रान्तनानार्थवशतः क्वचिद्वाच्यं तिरस्क्रियते, क्वचित्तु विवक्ष्यत इति स्थितम्। एतच्च सर्वं बहुवक्तव्यत्वादिह न निरूप्यते। लक्षणामार्गावगाहित्वं तु ध्वनेः सहृदयैर्नूतनतयोपवर्णितस्य विद्यत इति दिशमुन्मीलयितुमिदमत्रोक्तम्। एतच्च विद्वद्भिः कुशाग्रीयया बुद्ध्या निरूपणीयम्, न तु झगित्येवासूयितव्यमित्यलमतिप्रसंगेन। तदेवं वाच्यस्य तिरस्कृतविवक्षायां विषयविभागो निरूपितः।

## (सुबोधिनी)

**क्रियायोगनिबन्धनाया**मिति। क्रियायोगनिबन्धनायां क्रियायोगो निबन्धनं यस्याः सा तस्यां लक्षणायां, लक्ष्यमाणस्यार्थस्य लक्ष्यार्थस्य, शब्दगतावयवशक्त्यनुसरणे शब्दगता याऽवयवशक्तिस्तदनुसरणे योगरूपे सति इत्यर्थः, शब्दशक्तिमूलता शब्दशक्तिः मूले यस्य तस्य भावः शब्दशक्त्या लक्ष्यार्थस्य प्रकाश्यमानत्वात्। **तत्र चे**ति। तत्र च क्रियायोगनिबन्धनायां, वाच्यस्यार्थस्य तिरस्क्रिया परित्यागः, यथा 'पुरुषः पुरुष' इति। तदेव संगमयति **'अत्र ह्येकेने'**ति। अत्र 'पुरुषः पुरुष' इत्यत्र, एकेन पुरुषशब्देन प्रथमपुरुषशब्देन, विशिष्टजातीयस्यार्थस्य पुरुषजातिविशेषस्यार्थस्य, उपात्तत्वात् गृहीतत्वात्, अपरः पुरुषशब्दः अन्यः पुरुषशब्दः, स्ववाच्यव्यतिरेकेणैव पुरुषजातिरूपवाच्यार्थभिन्नेनैव, क्रियायोगनिबन्धनया पुरि देहे शेते इति पुरुषः इति व्युत्पत्त्या देहशयनविशेषक्रियया सह संबन्धात् पुरुषशब्दो

क्रियायोगनिबन्धनया लक्षणया, पुनरतिशयितृत्वं पुरुषजातेरतिशयबोधकत्वम्, उपादत्ते स्वीकरोति। अयमर्थः 'पुरुषः पुरुषः' इत्यत्र द्वितीयपुरुषशब्दः पुरि देहे शेते इति योगबलेनावयवशक्त्या स्वविशिष्टगुणयुक्तं पुरुषं लक्षयति।

**यत्र त्विति**। यत्र तु भिन्ने स्थले, निमित्तसद्भावात् कारणसाहित्येन, वाच्येऽर्थे स्वार्थे, विवक्षित एव वाच्यार्थसहित इत्यर्थः, शब्दशक्त्यन्तरमूलतया लक्षणारूपभिन्नशब्दशक्तिमूलकत्वेन, व्यवस्थितस्य स्थापितस्य, तस्यार्थान्तरस्य वाच्यार्थभिन्नस्य लक्ष्यमाणस्यार्थस्य, अव्यववायः बाधोऽनुपपत्तिर्वा, क्रियते विधीयते, तत्र तद्विपरीतता नाम वाच्यार्थतिरस्क्रियावैपरीत्यं वाच्यार्थस्य तिरस्क्रियायाः वैपरीत्यम् अर्थात् अतिरस्कृता विवक्षितता वेति स्पष्टम्। **न खल्वत्रेति**। अत्र प्रकृते, वाच्यस्यार्थस्य न तिरस्क्रिया परित्यागः, अपि तु विवक्षितत्वमेव सहितत्वमेव, यथा 'महति समरे शत्रुघ्नस्त्व'मिति। **अत्र हीति**। अत्र हि 'महति समरे शत्रुघ्नस्त्व'मित्यादौ, शत्रुघ्नशब्दः शत्रुघ्न इति पदं, क्रियायोगनिबन्धनया लक्षणया क्रियायोगमूललाक्षणिकाभिधाव्यापारेण, शत्रुहननक्रियायाः कर्तृत्वं शत्रुहन्तृरूपं, अवगमयन्नपि बोधयन्नपि, स्वार्थं वाच्यार्थं, दाशरथिं दशरथात्मजम्, उपमानतयाऽपि प्रतिपादयति तत्सदृशत्वेन बोधयति। तेन तस्मात्, तस्य विवक्षितस्य दशरथात्मजसदृशरूपस्यार्थस्य, स्वार्थतापि निजार्थतापि। **यद्यपीति**। एवंविधे विषये 'महति समरे शत्रुघ्नस्त्व'मित्यादौ, उपमानस्य दशरथात्मजस्य, उपमेयपरत्वेन तद्राजविशेषरूपेण, सहृदयैः सहृदय इति प्रसिद्धैः आनन्दवर्धनाचार्यैः, अत्यन्ततिरस्कृतवाच्यता वाच्यार्थस्यात्यन्ततिरस्कृतत्वम्, अङ्गीक्रियते स्वीक्रियते, तथापि क्रियायोगनिबन्धनलक्षणावसरे तावद्, वाच्यस्य दशरथात्मजस्य, उपमानत्वेनाङ्गीकृतत्वात् सदृशपदार्थान्तरत्वेन स्वीकृतत्वात्,

अतिरस्कृतवाच्यतापि भवति अपरित्यक्तस्वार्थतापि भवतीत्यर्थः। **तदेव**मिति। तदेवं पूर्वोक्तप्रकारेण, क्रियायोगनिबन्धनायाम् क्रियायोगमूललक्षणायाम्, अन्तःसंक्रान्तनानार्थवशतः अन्तःप्रतिविम्बितभिन्नार्थकारणात्, क्वचित् 'पुरुषः पुरुष' इत्यत्र वाच्यं सामान्यपुरुषार्थः, तिरस्क्रियते परित्यज्यते, क्वचित्तु 'महति समरे शत्रुघ्नस्त्व'मित्यादौ, वाच्यं विवक्ष्यते अपरित्यज्यते, इति स्थितं सिद्धम्।

**एतच्च सर्व**मिति। एतच्च सर्वं लक्षणाभेदेषु वाच्यस्य तिरस्कृतातिरस्कृतत्वविवक्षितत्वाविवक्षितत्वादिकं, बहुवक्तव्यत्वात् अधिकविस्तारपूर्वकनिरूपणीयत्वात्, इह संप्रति, न निरूप्यते नैव विचार्यते। **लक्षणामार्गावगाहित्व**मिति। सहृदयैः काव्यास्वादप्रवणैः सहृदयैः (आत्मानं सहृदय इत्युद्घोषयद्भिः ध्वान्यालोककारैः आनन्दवर्धनाचार्यैर्वा) नूतनतयोपवर्णितस्य ध्वनेः नवीनरूपेण कथितस्य ध्वनिरिति तत्त्वस्य, लक्षणामार्गावगाहित्वं लक्षणाभेदान्तर्भावित्वं, विद्यत इति वर्तत इति दिशमुन्मीलयितुं मार्गं दर्शयितुम्, इदमत्रोक्तं एतदिह विवेचितम्। अयमाशयो ध्वनिरिति यो नवीनपदार्थः सहृदयैर्निरूपितोऽसौ अस्मदुक्तलक्षणायामन्तर्भवतीति प्रदर्शयितुमिदमत्राकूतम्। **एतच्च विद्वद्भि**रिति। एतच्च ध्वनेर्लक्षणायामन्तर्भावत्वं, विद्वद्भिः काव्यशास्त्रपरिशीलनप्रवणैः, कुशाग्रया बुद्ध्या अतिसूक्ष्मेक्षिकया, निरूपणीयं विचारणीयं, न तु झगित्येवासूयितव्यं सूक्ष्मेक्षिकया विचारात्पूर्वं सपद्येव ध्वनेः लक्षणान्तर्भावत्वरूपमस्मद्विचारं प्रति ईर्ष्या नैव विधेया, इत्यलमतिप्रसंगेन अतिविस्तारानपक्षेत्यर्थः। **तदेव**मिति। तदेवं पूर्वोपदर्शितानुसारं, वाच्यस्य तिरस्कृतविवक्षायां वाच्यार्थस्य तिरस्कृतत्वे विवक्षितत्वे च, विषयविभागो निरूपितः भिन्नविषयत्वं कथितम्।

## (सङ्गमनी)

क्रियायोगनिबन्धना लक्षणा में वाच्यार्थ का तिरस्कार और

विवक्षितत्व को बताने हेतु कहते हैं- **क्रियायोगनिबन्धनायां** इत्यादि। क्रियायोगनिबन्धना लक्षणा में शब्दगत अवयवशक्ति के अनुसरण होने से लक्ष्यमाण अर्थ की प्रतीति शब्दशक्तिमूलक होती है। वहाँ वाच्य अर्थ का तिरस्कार होता है, जैसे कि 'पुरुषः पुरुष' (वह पुरुष पुरुष ही है) यहाँ एक पुरुष शब्द से पुरुषजातिविशेष अर्थ के ग्रहण होने से अन्य पुरुष शब्द पुरुषजातिरूप वाच्यार्थ से भिन्न होने से कियायोग के कारण पुरि अर्थात् देह में शेते अर्थात् शयन करता है इस व्युत्पत्ति से देह में शयन रूप क्रिया से संबद्ध होने से पुरुषशब्द क्रियायोगनिबन्धना लक्षणा के द्वारा पुरुषजातिरूप अर्थ में अतिशयबोध का कारण बन जाता है। अर्थात् द्वितीय पुरूष शब्द पुरि अर्थात् देह में शेते अर्थात् शयन करता है इस प्रकार यौगिक रूप होकर स्वजातिविशिष्टगुणयुक्त पुरुष को लक्षित करता है।

जहाँ निमित्तविशेष के रहने से वाच्य अर्थ विवक्षित बना रहता है और साथ ही अन्य शक्तिद्वारा (लक्षणाशक्तिद्वारा) प्रतीत होने वाले अर्थान्तर को बाधित करता हे, वहाँ उस तिरस्कार के विपरीत होने से वाच्यार्थ को तिरस्कृत का विपरीत अर्थात् अतिरस्कृत या विवक्षित माना जाता है। यहाँ वाच्यार्थ का तिरस्कार नहीं होता है अपि तु विवक्षा होती है; जैसे कि 'महति समरे शत्रुघ्नस्त्वम्' इस उदाहरण में शत्रुघ्नशब्द शत्रुहननक्रिया के कर्ता को क्रियायोगनिबन्धना लक्षणा से प्रतिपादित करते हुए दशरथात्मजरूपी स्वार्थ को भी उपमान के रूप में प्रतिपादित करता है। अतः यहाँ मुख्य अर्थ विवक्षित रहता है। यद्यपि यहाँ उपमानपद का उपमेय के रूप में प्रयोग होने से इस प्रकार स्थल में सहृदय (ध्वनिवादी आचार्य) अत्यन्ततिरस्कृतवाच्य मानते हैं। तथापि क्रियायोगनिन्धना लक्षणा के अवसर में भी वाच्यार्थ के उपमान के रूप में स्वीकृत होने से अत्यन्ततिरस्कृतवाच्यत्व भी होता है।

इसप्रकार क्रियायोगनिबन्धना लक्षणा में अनेक अर्थों के अन्तःसंक्रान्त होने के कारण कहीं पर वाच्यार्थ का तिरस्कार और कहीं पर वाच्यार्थ विवक्षित रहता है यह प्रमाणित हुआ है। अत्यन्त विस्तार के भय से इस का यहाँ निरूपण नहीं किया जाता है। सहृदयों (ध्वनिवादी

आचार्यों) के द्वारा नवीन रूप से वर्णित ध्वनि लक्षणा का ही एक अङ्ग है, इस दिशा का संकेत करने के लिए यहाँ विवेचन किया गया। विद्वान लोगों को सूक्ष्म बुद्धि से इसका निरूपण करना चाहिए न कि तुरन्त ही अविचार पूर्वक इस सिद्धान्त की निन्दा करनी चाहिए यह निवेदन करके हम विस्तार या अतिप्रसंग से विरत हो रहे हैं। इस प्रकार (क्रियायोगनिबन्धना लक्षणा में ) वाच्यार्थ का तिरस्कार और विवक्षा में भेद बताया गया है।

(मातृका)

{वाक्तत्त्वस्य विवर्तरूपमभिधावृत्तम्}

**इदानीं 'सकलशब्दाविभागात्मकस्य शब्दतत्त्वस्य यदा शब्दार्थसंबन्धत्रितयरूपतया रज्जुसर्पतया विवर्तमानत्वं तदैतदभिधावृत्तं दशविधव्यवहारोपारोहितयोपपद्यते, न तु संहृतार्थवाक्तत्त्वविषयतये'ति दर्शयितुमाह -**

**विवर्तमानं वाक्तत्त्वं दशधैवं विलोक्यते।। १२।।**

**संहृतक्रमभेदे तु तस्मिंस्तेषां कुतो गतिः।**

**सकलशब्दाविभागात्मनः शब्दतत्त्वस्य प्रमातृप्रमाणप्रमेयप्रमितिरूपेण प्रकारचतुष्टयेन प्रत्येकं वाच्यवाचकतासंबन्धप्रपञ्चभाजो रज्जुसर्पवद् विवर्तमानस्य निरूपितैवंविधदशविधाभिधावृत्तसम्बन्धित्वम्। अप्रत्यस्तमितसकलविकल्पोल्लेखोपप्लवत्त्वे तु क्रमभेदसंहारेण तस्मिन् वाक्तत्त्वे विवर्तमाने तेषां दशानामभिधावृत्तानां 'कुतो गतिः' - नैव प्रसर इत्यर्थः।**

(सुबोधिनी)

**इदानी**मिति। इदानीं संप्रति, सकलशब्दाविभागात्मकस्य सकलानां समस्तानां शब्दानां अविभागः नास्ति विभागः भेदो यस्य तस्य शब्दस्वरूपस्येत्यर्थः, शब्दतत्त्वस्य अद्वैतशब्दब्रह्मणः, यदा

शब्दार्थसंबन्धत्रितयरूपतया शब्दश्चार्थश्च तयोः संबन्धश्चेत्येतेषां यत्त्रितयरूपत्वं तेन, रज्जुसर्पतया रज्जौ सर्पप्रतीतिवत्, विवर्तमानत्वं अतत्त्वेनान्यथाप्रथारूपं, तदैतदभिधावृत्तं तदासावभिधाव्यापारः, दशविधव्यवहारोपारोहितया दशप्रकारव्यवहारोपयोगित्वेन, उपपद्यते युज्यते, न तु संहृतार्थवाक्तत्त्वविषयतया संहृता अर्था यस्मात् तत् वाक्तत्त्वं तस्य यो विषयस्तस्य भावस्तया अद्वैतशब्दब्रह्मणः विषयत्वेन, इति दर्शयितुमाह इत्थं कथयितुं निगद्यते।

**विवर्तमान**मिति। वाक्तत्त्वं विवर्तमानं (सत्) एवं दशधा विलोक्यते। तस्मिन् संहृतभेदे तु तेषां कुतो गतिरित्यन्वयः। **वाक्तत्त्व**मिति। वाक्तत्त्वं वाचस्तत्त्वं शब्दतत्त्वं, विवर्तमानं सत् अतत्त्वेनान्यथाप्रथात्वेन प्रतीयमानं सत्, एवमुक्तप्रकारेण, दशधा दशप्रकारेण, विलोक्यते दृश्यते। **तस्मिन् संहृतक्रमभेदे** इति। तस्मिन् संहृतक्रमभेदे संहृताः क्रमभेदा यस्मिन् यत्र शब्दार्थतत्संबन्धाः संहृता दृश्यन्ते तत्राद्वैतशब्दब्रह्मणि, तेषां दशानामभिधावृत्तानां, कुतो गतिः कुतः प्रसरः? अयमर्थः वस्तुतः शब्दब्रह्म अद्वैतम् एकञ्च वर्तते। परं तद् अर्थभावेन विवर्तमानं सद् दशविधाभिधाप्रकारैः विलोक्यते। यत्र तु तेषां क्रमभेदानां संहारो भवति तत्र तेषामभिधाभेदानां नैव प्रसरो भवति।

**सकलशब्दाविभागात्मन** इति। सकलशब्दाविभागात्मकस्य सकलानां समस्तानां शब्दानां अविभागः विभागाभावः आत्मा यस्य तस्य, शब्दतत्त्वस्य अद्वैतशब्दब्रह्मणः,प्रमातृ (आत्मा) च प्रमाणं (इन्द्रियं) च प्रमेयं (ज्ञेयं) च प्रमितिः (ज्ञानं) चेति तेषां रूपं तेन अत्मेन्द्रियज्ञेयज्ञानरूपेण, प्रकारचतुष्टयेन चतुर्विधप्रकारेण, प्रत्येकं प्रकार इति शेषः, वाच्यश्च वाचकश्च तत्संबन्धश्च तान् भजते योऽसौ तस्य (शब्दस्य), रज्जुसर्पवद् विवर्तमानस्य रज्जौ सर्पभ्रान्तिवद् अतत्त्वेनान्यथात्वेन प्रतीयमानस्य, निरूपितैवंविधदशविधाभिधावृत्त-

संबन्धित्वं अभिधायाः प्राङ्निरूपिता दशप्रकारा भवन्तीत्यर्थः। **अप्रस्तमितेति**। अप्रत्यस्तमिता अनिराकृताः, सकलविकल्पानां समस्तभेदानाम्, उपप्लवः अभावः यस्मिन् तत् तस्य भावस्तस्मिन् अनिराकृतसमस्तभेदाभावत्वे भेदाभावस्थले, त्विति व्यतिरेकस्थले, क्रमभेदसंहारेण क्रमभेदपरिहारेण, तास्मिन् वाक्तत्त्वे तदद्वैतशब्दब्रह्मस्वरूपे, विवर्तमाने विवर्तत इति विवर्तमानं तस्मिन्, तेषां दशानामभिधावृत्तानां कुतो गतिः नैव प्रसरः इति स्पष्टम्।

**विशेषः** - नादात्मकः शब्दो व्याकरणशास्त्रे शब्दस्फोट इत्युच्यते। तत्राभिधायाः स्थानं नास्ति। यदाऽयं नादः कण्ठताल्वादिस्थानेषूच्चार्यते तदासौ भिन्नभिन्नावस्थां गमितः सन् श्रुतिपथमायाति। तदा प्रत्येकं नादखण्डेन सह संकेतात्मको बौद्धिकः संबन्धः स्थाप्यते। स च संबन्धः शब्दशक्तिरित्युच्यते, तेन चार्थबोधो जायते। काश्मीरशैवदर्शने पराशक्त्यात्मकः शब्दो ब्रह्मरूपो नित्यो भवति, अर्थश्च तस्य विवर्तरूपः। अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदीरितः इति कथनानुसारं सत्यभूते रज्जौ प्रातिभासिकस्य सर्पस्य प्रतीतिः विवर्त इत्युच्यते। तथैव ब्रह्मात्मकः शब्दः पारमार्थिकः सत्यश्च, तत्र मिथ्याभूतस्य प्रातिभासिकस्य वाऽर्थस्य प्रतीतिः जायते। इत्येवं रीत्या शब्दार्थयोः सत्तायां भेदः। एवं पारमार्थिके शब्दब्रह्मणि प्रातिभासिकस्यार्थस्य बोध एव विवर्तपदेनात्रोक्तः। वाक्यपदीयकारो भर्तृहरिरप्यमुं सिद्धान्तमनुसरन् वक्ति -

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।

(वाक्यपदीयम्, १/१)

अयमर्थो यच्छब्दतत्त्वमनाद्यनन्तमक्षरञ्च। तस्माच्च जगतः प्रक्रियाऽर्थभावेन विवर्तते। तथैव मुकुलभट्टोऽपि कास्मीरशैवदर्शनाधारेण प्रतिपादयति यदभिधाशक्तेः ये दश भेदाः प्रतिपादिताः ते नित्यस्य

शाश्वतस्य शब्दब्रह्मणो विवर्तरूपाः। यदा तु तन्नित्यं शब्दतत्त्वं तान् सर्वानपि वाच्यवाचकतत्संबन्धरूपान् क्रमभेदान् आत्मनि संहरते तदा तेषां दशविधानामभिधाव्यापाराणां प्रसारो नास्त्येव। वस्तुतोऽभिधाया इमे भेदाः केवलं लौकिकव्यवहारार्थमेव कृताः सन्ति। वास्तवेन नित्ये शब्दब्रह्मणि तेषां स्थानं नास्त्येव।

**(सङ्क्रमनी)**

अभी समस्त वाक्-तत्त्व अभिधावृत्त का ही विवर्तरूप है यह बताने के लिए कहते हैं- **इदानीम्** इत्यादि। अभी सारे शब्द आत्मरूप में जिस शब्दतत्त्व में विद्यमान हैं, उसके शब्द, अर्थ और उनके संबन्ध इस प्रकार तीन भेदों में कहा गया यह अभिधावृत्त (अभिधा का चरित या अभिधाव्यापार) जो कि रज्जु में सर्प की भाँति विवर्त रूप में प्रतीत होता है, उस के दश भेद व्यवहार के उपयोग हेतु प्रयुक्त होते हैं; न कि अर्थ रहित अद्वैत शब्दब्रह्म के विषय के रूप में। यह बताने हेतु कहा गया है-

**(कारिका)** विवर्तभाव को प्राप्त वाक्-तत्त्व पूर्वोक्त प्रकार से दश पूर्वोक्त प्रकार से दश प्रकार का दृष्टिगोचर होता है। किन्तु जब वह क्रमविभाग संहृत हो जाता है, उन दशविध अभिधाव्यापार की गति कहाँ से होगी? अर्थात् संहृतक्रमभेदस्वरूप शब्दब्रह्म में अभिधा के वे भेद नहीं होते हैं।

सभी शब्दों का अभिन्नरूप शब्दतत्त्व जिस के प्रमाता, प्रमाण, प्रमेय और प्रमिति के भेद से चार भेद हैं और उनमें से प्रत्येक वाच्य, वाचक और उनके संबन्ध के विस्तार को धारण करते हैं; उस शब्द तत्त्व में ये सभी प्रपञ्च उसी प्रकार विवर्तरूप से प्रकट होते हैं जिस प्रकार रस्सी में सर्प विवर्तमान होता है। विवर्तभाव को प्राप्त इस शब्दतत्त्व में पूर्वोक्त अभिधाव्यापार के दस भेदों का संबन्ध रहता है। इन समस्त भेदों के विकल्पों के संबन्ध शान्त हो जाने पर भेद एवं क्रमों का संहार अर्थात् नाश हो जाता है। अर्थात् अखण्डरूप में एक ही शब्दब्रह्म शेष रह जाता है। आचार्य भर्तृहरि ने भी वाक्यपदीय में कहा है-

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।
(वाक्यपदीयम्,१/१)

एकमेव यदाम्नातं भिन्नशक्तिव्यपाश्रयात्।
अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते।।
(वाक्यपदीयम्, १/२)

अर्थात् शब्दतत्त्व का आद्य, अन्त और क्षय नहीं होता है। उसी शब्दतत्व से जगत् की प्रक्रिया अर्थ के रूप में विवर्तित होता है। जो एक ही के रूप में प्रसिद्ध हुआ है, वह भिन्न भिन्न शक्ति के आश्रय से उन शक्तिओं से भिन्न न होते हुए भी भिन्न रूप में प्रतीत होता है।

## (मातृका)
### {अभिधावृत्तस्य फलम्}

**इदानीं प्रकरणार्थमुपसंहरति -**

**इत्येतदभिधावृत्तं दशधात्र विवेचितम्।। १३ ।।**

**मुख्यस्याभिधावृत्तस्य प्रकाराश्चत्वारः, लाक्षणिकस्य तु षडित्येवं दशप्रकारमभिधावृत्तमत्र विवेचितम्। अधुना फलमेतस्य दर्शयति**

**पदवाक्यप्रमाणेषु तदेतत् प्रतिबिम्बितम्।**
**यो योजयति साहित्ये तस्य वाणी प्रसीदति।। १४।।**

**पदावगतिहेतुत्वात् पदं व्याकरणम्। वाक्यसमन्वयावसायहेतुत्वाद् वाक्यं मीमांसा। प्रमाणप्रतिपत्तिकारित्वात् प्रमाणं तर्कः। एतेषु पदवाक्यप्रमाणशास्त्रेषु चतुर्वर्गोपयोगिसर्वविद्याधिगमोपायभूतेषु त्रिषु प्रविभिद्यमानेषु संक्रान्तानन्तरनिरूपितस्वरूपप्रतिबिम्बं दशविधमभिधावृत्तं यः साहित्यादौ (साहित्ये सर्गबन्धादौ) सकललोकव्यवहारदर्पणप्रक्षे संचारयति स वाचि क्रमेण प्रसीदन्त्यां वागीश्वरो भवति।**

**दशविधेनानेनाभिधावृत्तेन समग्रस्य वाक्परिस्पन्दस्य व्याप्तत्वादनेन व्याकरणमीमांसातर्कसाहित्यात्मकेषु चतुर्षु शास्त्रेषूपयोगात् तद्द्वारेण च सर्वासु विद्यासु सकलव्यवहारमूलभूतासु प्रसारणादस्य दशविधस्याभिधावृत्तस्य सकलव्यवहारव्यापित्वमाख्यातम्।**

**भट्टकल्लटपुत्रेण मुकुलेन निरूपिता।**
**सूरिप्रबोधनायेयमभिधावृत्तिमातृका।। १५ ।।**

**इति शारदाचरणरजःकणपवित्रितस्थलवास्तव्य-श्रीकल्लटात्मजभट्टमुकुलविरचिता अभिधावृत्तमातृका समाप्ता।**

## (सुबोधिनी)

**इदानी**मिति। इदानीं संप्रति प्रकरणार्थं ग्रन्थप्रतिपाद्यम्, उपसंहरति समापयति। **इत्येत**दिति। पूर्वोक्तरूपेण प्रथमं ग्रन्थादौ "शब्दस्य च मुख्येन लाक्षणिकेन वाभिधाव्यापारेणार्थावगतिहेतुत्वमिति मुख्यलाक्षणिकयोरभिधाव्यापारयोरत्र विवेकः क्रियते" इत्यदिना संकल्पितस्य मुख्यस्याभिधाव्यापारस्य जातिगुणक्रियायदृच्छात्वेन चत्वारः प्रकाराः, लाक्षणिकस्य चाभिधाव्यापारस्य प्रथमं शुद्धा उपचारमिश्रा चेति भेदद्वयं प्रतिपाद्य शुद्धायाः उपादानलक्षणालक्षणलक्षणात्वेन भेदद्वयं, उपचारमिश्रायाश्च शुद्धोपचारगौणोपचारत्वेन द्विधा विभक्तायाः सारोपासाध्यवसानत्वेन चतुर्धेत्येवं सम्मिल्याभिधावृत्तस्य दश भेदा भवन्ति। तदेव वृत्तावपि स्पष्टीकरोति **मुख्यस्याभिधावृत्तस्ये**ति। मुख्यस्याभिधावृत्तस्य अभिधाप्रकारस्य प्रकाराश्चत्वारो जातिगुणक्रियायदृच्छात्वेन, लाक्षणिकस्य तु षट् उपादानलक्षणालक्षणलक्षणा, सारोपागर्भौ शुद्धगौणोपचारौ, साध्यवसानागर्भौ शुद्धगौणोपचारौ चेत्येवं दशप्रकारमभिधावृत्तमत्र विवेचितम्। मुकुलभट्टोक्ताभिधावृत्तेः दशप्रकारा

निम्नप्रकारेण भवन्ति। तथा हि-




दशविधस्यास्याभिधावृत्तस्य प्रयोजनं दर्शयितुमाह **अधुना फलमेतस्य दर्शयती**ति। एतस्य दशप्रकारस्याभिधावृत्तस्य प्रयोगस्थलानि प्रदर्श्यन्ते। **पदवाक्यप्रमाणे**ष्वित्यादि। तदेतत् पदवाक्यप्रमाणेषु प्रतिबिम्बितं (दृश्यते)। साहित्ये यो योजयति तस्य वाणी प्रसीदती**त्यन्वयः**। तदेतत् दशविधमभिधावृत्तं, पदं व्याकरणं,

वाक्यं मीमांसा, प्रमाणं न्यायः चेति पदवाक्यप्रमाणानि तेषु व्याकरणमीमांसान्यायशास्त्रेषु, प्रतिबिम्बितं प्रयुक्तं दृश्यत इति शेषः। यो जनः विद्वान्, साहित्ये काव्यादौ, योजयति प्रयुंक्ते, तस्य जनस्य विदुषो वा, वाणी सरस्वती, प्रसीदति प्रसन्ना भवतीत्यर्थः।

कारिकां विवृणोति **पदावगतिहेतुत्वादि**त्यादि। पदावगतिहेतुत्वात् पदं व्याकरणं व्याकरणशास्त्रं हि मुख्यतः सुप्तिङन्तरूपपदव्याख्यानपरमिति तत् पदशास्त्रमित्युच्यते। वाक्यसमन्वयावसायहेतुत्वात् वाक्यानां विधिनिषेधरूपाणां, समन्वये परस्परं संगतिस्थापने, योऽवसायो निश्चयस्तस्य यो हेतुस्तस्य भावस्तस्मात्, मीमांसाशास्त्रं हि वाक्येषु परस्परं समन्वयं स्थापयतीत्यतस्तत् वाक्यशास्त्रमित्युच्यते। प्रमाणप्रतिपत्तिकारित्वात् प्रमाणानामाधारेण तर्काणामाधारेण या प्रतिपत्तिः ज्ञानं तत्करोतीति तस्मात्, न्यायशास्त्रं हि प्रमाणाधारेण ज्ञानं कारयतीति तत् प्रमाणशास्त्रमित्युच्यते। **एतेष्वि**ति। एतेषु त्रिषु चतुर्वर्गोपयोगिविद्याधिगमोपायभूतेषु चतुर्वर्गेभ्यो धर्मार्थकामेभ्य उपयोगिन्यो या विद्यास्तासामधिगमायोपायभूतानि यानि (शास्त्राणि) तेषु, प्रविभिद्यमानेषु विभज्यमानेषु, पदवाक्यप्रमाणशास्त्रेषु व्याकरणमीमांसान्यायशास्त्रेषु, संक्रान्तानन्तरनिरूपितस्वरूपप्रतिबिम्बं संक्रान्तं संक्रमितम् निरूपितं स्वरूपं येषां ते तेषां प्रतिबिम्बं सद्यः निरूपितानां भेदानां स्वरूपप्रतिबिम्बं यस्मिन् संक्रमितं दृश्यते, तद् दशविधमभिधावृत्तं दशप्रकारोऽभिधाव्यापारस्तं, यो जनः विद्वान् वा, सकललोकव्यवहारदर्पणप्रख्ये सकलानां लोकानां व्यवहारस्य यो दर्पणत्वेन प्रख्यः प्रख्यातस्तस्मिन्, साहित्यादौ साहित्यशास्त्रे सार्गबन्धादौ महाकाव्यादौ वा संचारयति प्रयोजयति, स विद्वान्, प्रसीदन्त्यां प्रसादं प्राप्तवत्यां, वाचि सरस्वत्यां सत्यां, क्रमेण क्रमशः, वागीश्वरो वग्देव्याः सरस्वत्याः ईश्वरो बृहस्पतिसदृग् भवति।

**दशविधेनानेने**ति। अनेन दशविधेनाभिधावृत्तेन ग्रन्थेस्मिन् प्रतिपादितेन दशप्रकारेणाभिधाव्यापारेण, समग्रस्य वाक्परिस्पन्दस्य सम्पूर्णस्य वचनपरिप्रकाशस्य व्याप्तत्वात् व्यापकत्वेन विद्यमानत्वात्, व्याकरण-मीमांसा-तर्क-साहित्यात्मकेषु चतुर्षु शास्त्रेषूपयोगात् पदवाक्यप्रमाणरसशास्त्रेषूपयोगित्वात्, तद्द्वारेण च तन्माध्यमेन अभिधावृत्तमाध्यमेन च, सकलव्यवहारमूलभूतासु विद्यासु सकलानां व्यवहाराणां मूलभूता या विद्यास्तासु, प्रसारणात् व्यापनात्, अस्य दशविधस्याभिधावृत्तस्य दशप्रकारस्याभिधाव्यापारस्य, सकलव्यवहारव्यापित्वं समस्तव्यवहारव्यापित्वम्, आख्यातं प्रसिद्धम्।

**भट्टकल्लटपुत्रेणे**ति।भट्टकल्लटपुत्रेण मुकुलेन सूरिप्रबोधनाय इयम् अभिधावृत्तिमातृका निरूपितेत्यर्थः। भट्टकल्लटपुत्रेण भट्टकल्लटात्मजेन, मुकुलेन मुकुलाख्येन, सूरिप्रबोधनाय विद्वदुपज्ञाय, इयं हस्तथा, अभिधावृत्तिमातृका[१५] अभिधाख्या या वृत्तिः शब्दव्यापारस्तन्मातृका मातृस्वरूपिणी (पक्षे पाठान्तरे अभिधाव्यापरस्य यद्वृत्तं यत् प्रकरणं तस्य मातृका मातृस्वरूपिणी), निरूपिता निःशेषेण स्वरूपं प्रापिता।

**इति शारदाचरणे**ति। इति इत्थं, शारदायाः मातुः सरस्वत्याः, चरणयोः पादयोः, ये रजःकणाः ये धूलिकणाः, तैः पवित्रितं यत् स्थलं स्थानं, तस्य यो वास्तव्यः अधिवासी, यो कल्लटात्मजः कल्लटपुत्रो मुकुलभट्टस्तद्विरचिता तन्निर्मिता, अभिधावृत्तमातृका अभिधाव्यापरस्य यद्वृत्तं चरितं प्रकरणं वा तस्य मातृका जननीस्वरूपिणी जन्मदात्री पोषयित्री च, सा समाप्ता समाप्तिं गता।

इतीयमुत्कलगौरवभूतगञ्जाममण्डलान्तर्गतद्वारिकादेव्यधिष्ठित-द्वारशुणीप्रख्यग्रामलब्धजन्मश्रीमुरलीधरात्मजेन सुरसरस्वतीसेवकेन

---

१५. एशियाटिक-सोसाइटीद्वारा मुद्रिते संस्करणे अभिधावृत्तमिति लभ्यते।

माहान्तीत्युपाख्येन साहित्याचार्य-शिक्षाशास्त्रि-विद्यावारिध्युपाधिभिः समलंकृतेन सुज्ञानकुमारेण विरचिता सुबोधिनीति अभिधावृत्तिमातृकावृत्तिः समाप्ता।

**(सङ्क्रमनी)**

अभिधा के वृत्तों का फल दिखाते हैं- **इदानीम्** इत्यादि। अभी ग्रन्थ का प्रतिपाद्य विषय का उपसंहार करते हुए कहते हैं-

**(कारिका)** इस प्रकार यहाँ अभिधाव्यापर के दस भेद बताए गये हैं।

मुख्य अभिधाव्यापार के चार भेद और लाक्षणिक अभिधाव्यापार के छः, इस प्रकार अभिधाव्यापार के दस भेद बताये गये हैं। अभिधाव्यापार के दस भेद निम्न प्रकार से हैं-

मुख्य अभिधाव्यापार के जाति, गुण, क्रिया और यदृच्छा इस प्रकार चार भेदों के साथ लाक्षणिक अभिधाव्यापार के छः भेद निम्नप्रकार से कहे गये हैं-

१. शुद्धा उपादानलक्षणा,

२. शुद्धा लक्षणलक्षणा,

३. सारोपा शुद्धोपचारा,

४. सारोपा गौणोपचारा,

५. साध्यवसाना शुद्धोपचारा,

६. साध्यवसाना गौणोपचारा।

अतः मुख्यअभिधाव्यापार चार प्रकार का और लाक्षणिक अभिधाव्यापार छः प्रकार का होकर अभिधाव्यापार दस प्रकार का है ऐसा आचार्य मुकुलभट्ट ने बताया है।

अभी इस दसविध अभिधाव्यापार का फल दिखाते हैं-

**(कारिका)** पदशास्त्र (व्याकरण), वाक्यशास्त्र (मीमांसा) और प्रमाणशास्त्र (न्याय) में प्रतिविम्बित इस दसविध अभिधावृत्त को जो साहित्य में प्रयोग करता है, उसकी वाणी प्रसन्न होती है।

कारिका की व्याख्या करते हुए कहते हैं- सुप्तिङन्तरूप पदों की अवगति के कारण होने से पद अर्थात् व्याकरणशास्त्र है। वाक्य में (अर्थ का) समन्वय एवं निश्चय के हेतु होने से वाक्य अर्थात् मीमांसाशास्त्र है। प्रमाणों के आधार पर ज्ञान कराने से न्यायशास्त्र को प्रमाणशास्त्र या तर्कशास्त्र कहा जाता है। धर्म, अर्थ, काम और मोक्ष इस चतुर्वर्ग के साधन में उपयोगी, समस्त विद्याओं की प्राप्ति के उपायभूत, पृथक् पृथक् अवस्थित इन पद, वाक्य और प्रमाण शास्त्रों में जिस दसविध अभिधावृत्त का स्वरूप संक्रान्त होकर प्रतिबिम्बित हुआ है, उस अभिधावृत्त को जो व्यक्ति समस्तलोकव्यवहार के दर्पणभूत साहित्यशास्त्र में संचारित (प्रयुक्त) करता है, उसकी वाणी क्रमशः निर्मल होती जाती है, जिसके फलस्वरूप वह वागीश्वर (वाणी का ईश्वर/वृहस्पति) बन जाता है।

इसी दस प्रकार के अभिधावृत्त से समग्र वाङ्मय के व्याप्त होने से और व्याकरण, मीमांसा, तर्क और साहित्यशास्त्रों में यह (अभिधावृत्त) उपयोगी होता है और उस के द्वारा समस्त व्यवहारों के मूलभूत विद्याओं में इन दसविध अभिधावृत्तों का प्रसार होने के कारण इस अभिधावृत्त को समस्त व्यवहारों से व्याप्त बताया गया है।

विद्वानों के प्रबोधन (ज्ञान) के लिए कल्लटभट्ट के पुत्र मुकुलभट्ट ने यह अभिधावृत्तमातृका नामक ग्रन्थ का निर्माण किया गया है।

माता शारदा (सरस्वती) के चरण की धूल से पवित्र स्थल (कस्मीर) के निवासी श्रीभट्टकल्लट के पुत्र **भट्टमुकुलविरचित अभिधावृत्तमातृका** (यहाँ) समाप्त होती है।

**इस प्रकार उत्कल (उडिशा) के गौरवभूत गञ्जाम जिला के अन्तर्गत द्वारिकादेवी से अधिष्ठित द्वारशुणी नामक ग्राम में उत्पन्न श्रीमुरलीधरजी के पुत्र सुरसरस्वती के सेवक साहित्याचार्य, शिक्षाशास्त्री (बी.एड) और विद्यावारिधि इन उपाधिओं से समलंकृत डॉ.सुज्ञानकुमारमाहान्ति के द्वारा विरचित अभिधावृत्तिमातृका की सुगमनी नामक हिन्दी वृत्ति समाप्त हुई है।**

# अभिधावृत्तिमातृकायां प्रयुक्तानां पारिभाषिकशब्दानां व्याख्या

**पदार्थः**–पदजन्यबोधविषयत्वनिष्ठाऽऽश्रयत्वसंबन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतावान् पदार्थः। ते च भुक्तिमुक्त्योःसाधनभूतास्तथा तद्ज्ञानद्वारा तद्विपर्ययपरिवर्जनं जायते।

**प्रमाणं** - प्रमाणानि हि प्रमेयज्ञानकारणभूतानि पदार्थानां निश्चयात्मकं ज्ञानं साधयन्ति।

**मुख्यार्थः** - शब्दश्रवणानन्तरमव्यवधानेन यस्यार्थस्य प्रतीतिर्जायते स मुख्यार्थः।

**लक्ष्यार्थः** - शब्दान्मुख्यार्थप्रतीतेरनन्तरमेवाव्यभिचारेण यस्यार्थस्य प्रतीतिर्भवति स लक्ष्यार्थः।

**निरन्तरार्थविषयः** - अन्तरेण व्यवधानेन रहितं निरन्तरं, तच्च विषयो यस्य स निरन्तरार्थविषयो मुख्योऽभिधाव्यापारः। शब्दार्थयोर्मध्ये व्यवधानाभावात् मुख्यस्याभिधाव्यापारस्य निरन्तरार्थविषयत्वं बोध्यम्।

**सान्तरार्थनिष्ठः** - अन्तरेण व्यवधानेन सहितः सान्तारो योऽर्थस्तान्निष्ठस्तादाधारितो व्यापारो सान्तरार्थनिष्ठो लाक्षणिकत्वेनाभिधीयते।

**उपाधिः** - उपदधाति स्वधर्ममभिधादिकं व्यक्तौ संक्रामयतीति जात्यादिव्यक्तिधर्म उपाधिः।

**पदस्फोटः** - पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यपदश्रवणेन या सदसदनेकवर्णावगाहिनी संस्कारात्मिका मानसी प्रतीतिर्जायते सा पदस्फोटत्वेन वैयाकरणैरभिधीयते।

**सिद्धधर्मः** - यो धर्मः सत्ताप्राप्तिकाले सिद्धोऽवाप्यतेऽसौ सिद्धधर्मः। न हि गव्यश्वत्वाधानं संभवम्, नापि शुक्लादयो गुणाः कृष्णादित्वेन परिणमन्ते। अतः सत्तासादनकाले ये धर्माः सिद्धा भवन्ति, सिद्धतादशायां च यत्र परिवर्तनमानेतुं न शक्यतेऽसौ सिद्धधर्मः।

**विशेषाधानहेतुः** - लब्धस्वरूपस्य वस्तुनो गोत्वादिना प्राप्तस्वरूपस्य वस्तुनो, विशेषाधानहेतुः भेदाधानकारणं इत्युच्यते, यथा शुक्लादिर्गुणः।

**साध्यधर्मः** - क्रियायाश्च परिवर्तनशीलधर्मत्वात् साध्यत्वम्। न हि कश्चित् पदार्थः प्राणी वा सदैवैकामेव क्रियां समाचरति, यथा गौः कदाचिच्चरति, कदाचिच्चलति, कदाचिच्च स्वपिति। अत एव क्रियायाः साध्यत्वमित्यवगन्तव्यम्।

**उपचारः** - उपचारो नाम आरोपः। यथा 'गौर्वाहीक' इत्यत्र वाहीके गोत्वारोपः, 'आयुर्घृतम्' इत्यत्र घृते आयुष आरोपः।

**शुद्धोपचारः** - यत्र वाच्यलक्ष्ययोरुपमानोपमेयभावाभावात् कार्यकारणसंबन्धपूर्वक आरोपस्तत्र शुद्धोपचारः। यथा - 'आयुर्घृतम्' इत्यत्र।

**गौणोपचारः**-यत्र वाच्यलक्ष्ययोरुपमानोपमेयभावसंभवात् सादृश्यसंबन्धपूर्वक आरोपस्तत्र गौणोपचारः। यथा 'गौर्वाहीक' इत्यत्र।

**अध्यारोपः** - यत्रारोप्यमाणे आरोपविषयस्य भेदमनपह्नुत्यारोपस्तत्र अध्यारोपः। यथा - 'आयुर्घृतम्' इत्यत्र।

**अध्यवसानम्** -यत्र आरोप्यमाणे आरोपविषयस्य भेदापह्नवपूर्वकमारोपस्तत्र अध्यवसानम्। यथा - 'पञ्चाला' इत्यत्र।

**उपादानलक्षणा** - यत्र स्वसिद्ध्यार्थं परस्याक्षेपो भवति तत्रोपादानलक्षणा।

**लक्षणलक्षणा** - यत्र परस्य सिद्ध्यर्थं स्वार्थस्य त्यागो भवति तत्र लक्षणलक्षणा।

**अर्थापत्तिः / श्रुतार्थापत्तिर्वा** - उपपाद्यस्य श्रुतार्थस्य ज्ञानेन उपपादकस्यार्थान्तरस्य कल्पना यत्र भवति सा अर्थापत्तिः श्रुतार्थापत्तिर्वा। तदुक्तं श्लोकवार्तिके -

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत्।
अदृष्टं कल्पयेदन्यं साऽर्थापत्तिरुदाहृता।।

**शुद्धोपचारः गौणोपचारश्च** - द्विधा वस्तुनि वस्त्वन्तरमारोप्यते; क्वचित् कार्यकारणभावादिसंबन्धात्, अन्यत्र च सादृश्यसंबन्धात्। कार्यकारणभावादिसंबन्धे गुणस्यायोगात् शुद्ध उपचारः, गौणे चोपमानोपमेययोः सादृश्यगुणसंबन्धाद् गौण उपचार इति स्पष्टम्।

**अध्यारोपः** - अध्यारोप्यश्चाऽऽरोपविषयश्च तयोराधेयाऽऽधारयोः, भेदमनपह्नुत्यैव वस्त्वन्तरे वस्त्वन्तरं आरोप्यते, तत्रानपह्नुतस्वरूप (अनपह्नुतं स्वरूपं यस्य सः) एव अनिगीर्णविषय एव वस्त्वन्तरे घृतादौ, वस्त्वन्तरस्याधिकस्य भिन्नस्योपमानभूतस्याधिकगुणयुक्तस्यारोप अध्यारोप इति। यथा 'आयुर्घृतमि' त्यत्र, 'गौर्वाहीक' इत्यत्र च।

**अध्यवसानम्** - यत्र उपचर्यमाणविषयस्य प्रकृतस्य वर्ण्यमानस्य वा पदार्थस्य उपचर्यमाणेऽप्रकृत उपमानभूते वस्त्वन्तरेऽन्तर्लीनतया स्वरूपापह्नवः आत्मरूपगोपनं क्रियते तत्राध्यवसानम्। तत्र शुद्धोपचारे अध्यवसानस्योदाहरणं 'पञ्चाला' इति स्पष्टम्। गौणोपचारे-ऽध्यवसानस्योदाहरणं राजेति।

**तटस्थत्वम्** - लक्ष्यलक्षकयोः संबन्धाभावत्वम्।

**अदूरगत्वम्** - अदूरवर्तित्वं सामीप्यं वा।

**रूढ्या** - प्रसिद्ध्या।

**आसन्नतरत्वतः** - अतिसामीप्यात्।

**वक्ता** - यः परप्रतिपत्तये वाक्यमुच्चारयति स वक्ता।

**वाक्यम्** - साकांक्षाणां पदानामेकार्थसमूहो वाक्यम्।

**वाच्यम्** - शब्देन मुख्यं लाक्षणिकं वाभिधाव्यापारमाश्रित्य यद् गोचरीक्रियते तद् वाच्यम्।

**निरूढा लक्षणा**- या लक्षणा प्रसिद्ध्यनुरोधेन स्वसामर्थ्याद् वाच्यवत् प्रवर्तते सा निरूढा लक्षणेत्युच्यते राजेत्यादिकाः।

**सांप्रतं क्रियमाणा** - सांप्रतं क्रियन्ते या (लक्षणाः) वृद्धव्यवहारवक्त्राद्यपेक्षया तथाविधेऽन्यत्र विषये परिदृष्टस्वभावाः। यथा - रामोऽस्मि सर्वं सहे।

**अशक्तिकृता लक्षणा** - यासां लक्षणानां न वृद्धव्यवहारे दृष्टता, न च तस्मिन् शब्दे राजशब्दवद् दर्शनम्, नापि च तज्जातीयेषु शब्दान्तरेषु लिप्तादिशब्दवत्, तासामशक्यत्वात् ता अशक्तिकृता लक्षणा इत्युच्यन्ते। यथा- वडवामुखाग्न्यर्थे तुरङ्गकान्ताननहव्यवाहशब्दोऽशक्तिकृतो लाक्षणिकः प्रयोगः। सति तु गुप्तार्थप्रतिपादनादिप्रयोजनसंभवे एवंविधानामपि लक्षणानामदुष्टत्वम्। तथाविधविषये वृद्धव्यवहारेण तासामभ्यनुज्ञातत्वात्।

**अन्वयेऽभिहितानां सा वाच्यत्वादुर्ध्वमिष्यते** - अभिहितानामन्वये अभिहितान्वयवादे यत्र अभिधाव्यापारेण प्रतिपादितानां पदार्थानां परस्परं सम्बन्धः स्थाप्यते तत्र, सा लक्षणा, वाच्यत्वात् वाच्यार्थात्, ऊर्ध्वमिष्यते पूर्वं भवति।

**अन्वितानां तु वाच्यत्वे वाच्यत्वस्य पुरः स्थिता** - अन्विताभिधानवादे तु यत्रान्वितानामेव पदार्थानामभिधाव्यापारेण बोधो भवति तत्र, (सा लक्षणा) वाच्यत्वस्य पुरः स्थिता वाच्यार्थात् पूर्वं भवति।

**द्वये द्वयम्** - द्वये अभिहितान्वयान्विताभिधानोभयवादे समुच्चयवादे वा द्वयं परमपि पूर्वमपि सा लक्षणा भवति।

**अखण्डे नास्त्यसौ** - अखण्डवाक्यार्थवादे यत्र वाक्यार्थ एव परमार्थरूपेण स्वीक्रियते तत्र पदार्थानां सत्ताभावाल्लक्षणा नास्त्येव।

**मुख्यार्थासत्तिहेतुका** - मुख्यार्थेन सह (लक्ष्यार्थस्य) आसत्तिः (संबन्धः) हेतुः यस्याः सा वाच्यार्थसंबन्धनिमित्तेत्यर्थः। अयमर्थः मुख्यार्थेन सह लक्ष्यार्थस्य संबन्धः लाक्षणायां हेतुर्भवति। स च संबन्धः पञ्चप्रकारः। यथा

अभिधेयेन संबन्धात् सादृश्यात् समवायतः।
वैपरीत्यात् क्रियायोत्ल्लक्षणा पञ्चधा मता।।

**अत्यन्तं तिरस्कारः** - सर्वथा परित्यागः।

**अविवक्षितत्वं** - अपरित्यक्तत्वम्।

**विवक्षितत्वं** - परित्यक्तत्वम्।

**वाक्तत्त्वं** - वाचस्तत्त्वं शब्दतत्त्वमित्यर्थः।

**विवर्तमानं** - विवर्ततेऽसाविति विवर्तमानम्। अतत्त्वेन अन्यथा प्रतीयमानम्।

**संहृतक्रमभेदे** - संहताः क्रमभेदा यस्मिन्, यत्र शब्दार्थतत्संबन्धाः संहृता दृश्यन्ते। यत्र तेषां क्रमभेदानां संहारो भवति तत्र।

# अभिधावृत्तिमातृकाकारिका:

शब्दव्यापारतो यस्य प्रतीतिस्तस्य मुख्यता।
अर्थावसेयस्य पुनर्लक्ष्यमाणत्वमुच्यते।। १ ।।
तत्र मुख्यश्चतुर्भेदो ज्ञेयो जात्यादिभेदतः।
शुद्धोपचारमिश्रत्वाल्लक्षणा द्विविधा मता ।। २।।
उपादानाल्लक्षणाच्च शुद्धा सा द्विविधोदिता।
स्वसिद्ध्यर्थतयाक्षेपो यत्र वस्त्वन्तरस्य तत्।।३।।
उपादानं, लक्षणं तु तद्विपर्यासतो मतम्।
आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः।।४।।
प्रत्येकं भिद्यमानत्वादुपचारश्चतुर्विधः।
तटस्थे लक्षणा शुद्धा स्यादारोपस्त्वदूरगे।।५।।
निगीर्णेध्यवसानं तु रूढ्यासन्नतरत्वतः।
वक्तुर्वाक्यस्य वाच्यस्य रूपभेदावधारणात्।।६।।
लक्षणा षट्प्रकारैषा विवेक्तव्या मनीषिभिः।
अन्वयेऽभिहितानां सा वाच्यत्वादूर्ध्वमिष्यते।।७।।
अन्वितानां तु वाच्यत्वे वाच्यत्वस्य पुरः स्थिता।
द्वये द्वयमखण्डे तु वाक्यार्थपरमार्थतः।।८।।
नास्त्यसौ कल्पितेऽर्थे तु पूर्ववत् प्रविभज्यते।
मुख्यार्थासंभवात्सेयं मुख्यार्थासक्तिहेतुका।।९।।
रूढेः प्रयोजनाद्वापि व्यवहारे विलोक्यते।
सादृश्ये वैपरीत्ये च वाच्यस्यातितिरस्क्रिया।।१०।।
विवक्षा चाविवक्षा च संबन्धसमवाययोः।
उपादाने विवक्षात्र लक्षणे त्वविवक्षणम्।।११।।
तिरस्क्रिया क्रियायोगे क्वचित्तद्विपरीतता।
विवर्तमानं वाक्तत्त्वं दशधैवं विलोक्यते।। १२।।
संहृतक्रमभेदे तु तस्मिंस्तेषां कुतो गतिः।

इत्येतदभिधा**वृत्तं** दशधात्र विवेचितम्।। १३ ।।
पदवाक्यप्रमाणेषु तदेतत् प्रतिबिंबितम्।
यो योजयति साहित्ये तस्य वाणी प्रसीदति।। १४।।
भट्टकल्लटपुत्रेण मुकुलेन निरूपिता।
सूरिप्रबोधनायेयमभिधावृत्तिमातृका।। १५ ।।

---

## अभिधावृत्तिमातृका

सुबोधिनीसंस्कृतवृत्त्या
सङ्क्रमनीहिन्दीवृत्त्या च
विभूषिता

नवमेशवीयशतकोद्भवस्य आचार्यमुकुलभट्टस्य अभिधावृत्तिमातृका साहित्यशास्त्रे शब्दवृत्ति-विचारविषयकः प्रथमः प्रौढः प्राचीनश्च ग्रन्थः। सुबोधिनीति ग्रन्थस्यास्य प्रथमा संस्कृतवृत्तिः, सङ्क्रमनीति च हिन्दीवृत्तिरिति वृत्तिद्वयेन युक्ता अभिधावृत्तिमातृका त्रिवेणीवत् सुरसरस्वती-समुपाकानां साहित्यशास्त्रीय-विद्यार्थिनां विदुषाञ्चावस्यं जिज्ञासां शमयिष्यति। सङ्क्रमनीसंस्कृतवृत्त्यां ग्रन्थोक्तानां दुरुह-पारिभाषिकाणां पदानां परिष्कारः सरलया गिरा स्फुटतरया शैल्या च विहितोऽस्तीति नायं ग्रन्थः पूर्ववच्छात्राणां क्लेशकरो भविता। सुबोधिनीहिन्दीवृत्तिरपि यथावसरं तद्भाषिणां विद्यार्थिनां कृते महत उपकाराय भविष्यति।



ग्रन्थकारः **डॉ. सुज्ञानकुमार माहान्तिः**, श्रीमुरलीधरमाहान्ति-महोदयात्मजः, उत्कलराज्यस्य गञ्जाममण्डलान्तर्गते द्वारसुणीति ग्रामे १९६८तम ईशवियवर्षे जनुरग्रहीत्। श्रीजगन्नाथसंस्कृतविश्वविद्यालयात् शास्त्रिपरीक्षायां सर्वोच्चस्थानमधिकृत्य **लब्धस्वर्णपदकस्यास्य** सम्पूर्णेऽपि छात्रजीवने प्रायः सर्वास्वपि परीक्षासु प्रावीण्यसूच्यां स्थानमवर्तत। साहित्याचार्य-बी.एड-विद्यावारिध्युपाधिभि-र्विभूषितः विविधशास्त्रेषु वैदुष्यं भजमानः भाषणपाटवकाव्यरचनानाट्यनिर्देशनादि-बहुविधकलासु निपुणोऽसौ निजछात्रजीवने भारतस्य कोणे कोणेऽटन् संस्कृत-मन्दाकिन्या अजस्रामृतधारां प्रवाहयामास।

एतद्रचितानि ५० शोधलेखाः, श्लोकाः, कविताः, स्तोत्राणि च विविध-राष्ट्रियपत्रिकासु प्रकाशितानि। अनेन पञ्च ग्रन्था अपि विरचिताः, ते भवन्ति-

१. **काव्यप्रकाशीयसुधासागरटीकासमीक्षा।** २००० ई. वर्षे लोकभाषा-प्रचारसमितिपक्षतः प्रकाशितः।

२. काव्यशास्त्र। मध्यप्रदेश-भोज-मुक्तविश्वविद्यालये स्नातकोत्तरान्तिमवर्षस्य पाठ्यपुस्तकरूपेण २००५ ई. वर्षे प्रकाशितः।

३. **Evaluation in Sanskrit at Secondary Level.** Prescribed Text Book for the B. ed. (cc) of M.P. Bhoj Open University.

४. काव्यतत्त्वालोकः। प्राच्यपाश्चात्यकाव्यशास्त्रीयविषयकः निबन्धत्मकः ग्रन्थः प्रकाशनाधीनः।

५. अभिधावृत्तिमातृकायाः सुबोधिनीति संस्कृतवृत्तिः, सङ्गमनीति हिन्दीवृत्तिश्च। प्रस्तुतो ग्रन्थः।